॥ श्री ॥

अथ श्री त्रिविक्रमपण्डिताचार्यसुत श्री नारायणपण्डिताचार्यविरचितः

# ॥ श्री सुमध्वविजयः ॥

## १. प्रथमः सर्गः

कांताय कल्याणगुणैकधाम्ने नवद्युनाथप्रतिमप्रभाय ।
नारायणायाखिलकारणाय श्रीप्राणनाथाय नमस्करोमि ॥ १.१ ॥

अनाकुलं गोकुलमुल्ललास यत्पालितं नित्यमनाविलात्म ।
तस्मै नमो नीरदनीलभासे कृष्णाय कृष्णारमणप्रियाय ॥ १.२ ॥

अपि त्रिलोक्या बहिरुल्लसंती तमो हरंती मुहुरांतरं च ।
दिश्याद् दृशं नो विशदां जयंती मध्वस्य कीर्तिर्दिननाथदीप्तिम् ॥ १.३ ॥

तमोनुदाऽऽनंदमवाप लोकः तत्वप्रदीपाकृतिगोगणेन ।
यदास्यशीतांशुभुवा गुरूंस्तान् त्रिविक्रमार्यान् प्रणमामि वर्यान् ॥ १.४ ॥

मुकुंदभक्त्यै गुरुभक्तिजायै सतां प्रसत्त्यै च निरंतरायै ।
गरीयसीं विश्वगुरोर्विशुद्धां वक्ष्यामि वायोरवतारलीलाम् ॥ १.५ ॥

तां मंत्रवर्णैरनुवर्णनीयां शर्वेंद्रपूर्वैरपि वक्तुकामे ।
संक्षिप्नुवाक्ये मयि मंदबुद्धौ संतो गुणाढ्याः करुणां क्रियासुः ॥ १.६ ॥

उच्चावचा येन समस्तचेष्टाः किं तत्र चित्रं चरितं निवेद्यं ।
किंतूत्तमश्लोकशिखामणीनां मनोविशुद्ध्यै चरितानुवादः ॥ १.७ ॥

मालाकृतस्तच्चरिताख्यरत्नैः असूक्ष्मदृष्टेः सकुतूहलस्य ।
पूर्वापरीकारमथापरं वा क्षाम्यंतु मे हंत मुहुर्महांतः ॥ १.८ ॥

श्रीवल्लभाज्ञां ससुरेंद्रयाज्ञां संभाव्य संभाव्यतमां त्रिलोक्याम् ।
प्राणेश्वरः प्राणिगणप्रणेता गुरुः सतां केसरिणो गृहेऽभूत् ॥ १.९ ॥

येये गुणा नाम जगत्प्रसिद्धाः यं तेषु तेषु स्म निदर्शयंति ।
साक्षान्महाभागवतप्रबर्हं श्रीमंतमेनं हनुमंतमाहुः ॥ १.१० ॥

कर्माणि कुर्वन् परमाद्भुतानि सभासु दैवीषु सभाजितानि ।
सुग्रीवमित्रं स जगत्पवित्रं रमापतिं रामतनुं ददर्श ॥ १.११ ॥

पादारविंदप्रणतो हरींद्रः तदा महाभक्तिभराभिनुन्नः ।
अग्राहि पद्मोदरसुंदराभ्यां दोर्भ्यां पुराणेन स पूरुषेण ॥ १.१२ ॥

अदार्यसालावलिदारणेन व्यापादितेंद्रप्रभवेन तेन ।
प्राद्योतनिप्रीतिकृता निकामं मधुद्विषा संदिदिशे स वीरः ॥ १.१३ ॥

कर्णांतमानीय गुणग्रहीत्रा रामेण मुक्तो रणकोविदेन ।
स्फुरन्नसौ वैरिभयंकरोऽभूत् सत्पक्षपाती प्रदरो यथाऽग्र्यः ॥ १.१४ ॥

गोभिः समानंदितरूपसीतः स्ववह्निनिर्दग्धपलाशिराशिः ।
अहो हनूमन्नववारिदोऽसौ तीर्णांबुधिर्विष्णुपदे ननाम ॥ १.१५ ॥

अपक्षपाती पुरुषस्त्रिलोक्यां अभोगभोक्ता पतगाधिराजम् ।
विश्वंभरं बिभ्रदसौ जिगाय त्वरापराक्रांतिषु चित्रमेतत् ॥ १.१६ ॥

निबद्ध्य सेतुं रघुवंशकेतुभ्रूभंगसंभ्रांतपयोधिमध्ये ।
मुष्टिप्रहारं दशकाय सीतासंतर्जनाग्र्योत्तरमेषकोऽदात् ॥ १.१७ ॥

जाज्वल्यमानोज्ज्वलराघवाग्नौ चक्रे स सुग्रीवसुयायजूके ।
आध्वर्यवं युद्धमखे प्रतिप्रस्थात्रा सुमित्रातनयेन साकम् ॥ १.१८ ॥

रामार्चने यो नयतः प्रसूनं द्वाभ्यां कराभ्यामभवत् प्रयत्नः ।
एकेन दोष्णा नयतो गिरींद्रं संजीवनाद्याश्रयमस्य नाभूत् ॥ १.१९ ॥

स दारितारिं परमं पुमांसं समन्वयासीन्नरदेवपुत्र्या ।
वह्निप्रवेशाधिगतात्मशुद्ध्या विराजितं कांचनमालयेव ॥ १.२० ॥

श्यामं स्मितास्यं पृथुदीर्घहस्तं सरोजनेत्रं गजराजयात्रम् ।
वपुर्जगन्मंगलमेष दृग्भ्यां चिरादयोध्याधिपतेः सिषेवे ॥ १.२१ ॥

राज्याभिषेकेऽवसितेऽत्र सीता प्रेष्ठाय नस्तां भजतां दिशेति ।
रामस्य वाण्या मणि मंजुमालाव्याजेन दीर्घां करुणां बबंध ॥ १.२२ ॥

हृदोरुसौहार्दभृताऽधिमौलि न्यस्तेन हस्तेन दयार्द्र दृष्ट्या ।
सेवाप्रसन्नोऽमृतकल्पवाचा दिदेश रामः सहभोगमस्मै ॥ १.२३ ॥

प्रेष्ठो न रामस्य बभूव तस्मात् न रामराज्येऽसुलभं च किंचित् ।
तत्पादसेवारतिरेष नैच्छत् तथाऽपि भोगान् ननु सा विरक्तिः ॥ १.२४ ॥

नमो नमो नाथ नमोनमस्तॆ नमो नमो राम नमो नमस्ते ।
पुनःपुनस्ते चरणारविंदं नमामि नाथेति नमन् स रेमे ॥ १.२५ ॥

किं वर्णयामः परमं प्रसादं सीतापतेस्तत्र हरिप्रबर्हे ।
मुंचन् महीं नित्यनिषेवणार्थं स्वात्मानमेवैष ददौ यदस्मै ॥ १.२६ ॥

स्वानंदहेतौ भजतां जनानां मग्नः सदा रामकथासुधायाम् ।
असाविदानीं च निषेवमणो रामं पतिं किंपुरुषे किलाऽस्ते ॥ १.२७ ॥

तस्यैव वायोरवतारमेनं संतो द्वितीयं प्रवदंति भीमम् ।
स्पृष्टैव यं प्रीतिमताऽनिलेन नरेंद्रकांता सुषुवेऽत्र कुंती ॥ १.२८ ॥

इंद्रायुधं हींद्रकराभिनुन्नं चिच्छेद पक्षान् क्षितिधारिणां प्राक् ।
बिभेद भूभृद्वपुरंगसंगात् चित्रं स पन्नो जननीकराग्रात् ॥ १.२९ ॥

पुरे कुमारानलसान् विहारात् निरीक्ष्य सर्वानपि मंदलीलः ।
कैशोरलीलां हतसिंहसंघां वृत्तां वने प्राक् स्मरति स्म सूत्कः ॥ १.३० ॥

भुक्तं च जीर्णं परिपंथिदत्तं विषं विषण्णो विषभृद्गणोऽतः ।
प्रमाणकोटेः स हि हेळयाऽगात् नेदं जगज्जीवनदेऽत्र चित्रम् ॥ १.३१ ॥

दग्ध्वा पुरं योगबलात् स निर्यन् धर्मानिव स्वान् सहजान् दधानः ।
अदारिभावेन जगत्सु पूज्यो योगीव नारायणमाससाद ॥ १.३२ ॥

समर्प्य कृत्यानि कृती कृतानि व्यासाय भूम्ने सुकृतानि यावत् ।
करिष्यमाणानि च तस्य पूजां संकल्पयामास स शुद्धबुद्धिः ॥ १.३३ ॥

विष्णोःपदश्रिद् बकसन्निरासी क्षिप्तान्यपक्षिप्रकरः सुपक्षः ।
ससोदरोऽथाऽदित राजहंसः स राजहंसीमिव राजकन्याम् ॥ १.३४ ॥

इंदीवरश्रीजयिसुंदराभं स्मेराननेंदुं दयितं मुकुंदम् ।
स्वमातुलेयं कमलायताक्षं समभ्यनंदत् सुचिराय भीमः ॥ १.३५ ॥

महागदं चंडरणं पृथिव्यां बार्हद्रथं मंक्षु निरस्य वीरः ।
राजानमत्युज्ज्वलराजसूयं चकार गोविंदसुरेंद्रजाभ्याम् ॥ १.३६ ॥

दुःशासनेनाऽकुलितान् प्रियायाः सूक्ष्मानराळानसितांश्च केशान् ।
जिघांसया वैरिजनस्य तीक्ष्णः स कृष्णसर्पानिव संचिकाय ॥ १.३७ ॥

जाज्वल्यमानस्य वने वनेऽलं दिधक्षतः पार्थिवसार्थमुग्रम् ।
सत्त्वानि पुंसां भयदानि नाशं वृकोदराग्नेर्गुरुतेजसाऽऽपुः ॥ १.३८ ॥

भोगाधिकाभोगवतोऽरुणाक्षान् इतस्ततः संवलतो धरेंद्रे ।
बहून् द्विजिह्वान् मणिमत्पुरोगान् असौ कटून् क्रोधवशान् जघान ॥ १.३९ ॥

अथैष वेषांतरभस्मलीनः क्रमेण वायुप्रभवः सुतेजाः ।
रुद्धाखिलाशं मुखरं प्रचंडं भस्मीचकाराखिलकीचकौघम् ॥ १.४० ॥

स कृष्णवर्त्मा विजयेन युक्तो मुहुर्महाहेतिधरोऽप्रधृष्यः ।
भीष्मद्विजाद्यैरतिभीषणाभं विपक्षकक्षं क्षपयन् विरेजे ॥ १.४१ ॥

तरस्विनः प्रोच्चलितानधीरान् निर्दग्धपक्षानतितीक्ष्णकोपान् ।
स धार्तराष्ट्रान् बहुहेतिलीलो विनाश्य विश्वान् परया श्रियाऽभात् ॥ १.४२ ॥

कृष्णांघ्रिपंकेरुहभृंगराजः कृष्णामुखांभोरुहहंसराजः ।
प्रजासरोजावलिरश्मिराजः ससोदरोऽराजत वीरराजः ॥ १.४३ ॥

पौत्रे पवित्राह्वयजामिपौत्रे धरां निधायासुरधीषु तापम् ।
कीर्तिं त्रिलोक्यां हृदयं मुकुंदे भेजे पदं स्वं सहजैः स भीमः ॥ १.४४ ॥

विष्णोः पदांतं भजताऽनिलेन घोरप्रघातैरिति नाशितास्ते ।
रसोज्झिताश्चंचलवृत्तयोऽलं शोभां न भेजुः सुरवैरिमेघाः ॥ १.४५ ॥

ऐतत्प्रतीपं किल कर्तुकामाः नष्टौजसः संकटमेवमाप्य ।
मुकुंदवैगुण्यकथां स्वयोग्यां काले कलावाकलयंत तेऽलम् ॥ १.४६ ॥

यो भूरिवैरो मणिमान् मृतः प्राग् वाग्मी बुभूषुः परितोषितेशः ।
स संकराख्योऽंघ्रि तळेषु जज्ञे स्पृधा परेऽप्यासुरिहासुरेंद्राः ॥ १.४७ ॥

सान्नाय्यमव्यक्तहृदाखुभुग् वा श्वा वा पुरोडाशमसारकामः ।
मणिस्रजं वा प्लवगोऽव्यवस्थो जग्राह वेदादिकमेष पापः ॥ १.४८ ॥

जनो नमेन्नापरथेति मत्त्वा शठश्चतुर्थाश्रममेष भेजे ।
पद्माकरं वा कलुषीचिकीर्षुः सुदुर्दमो दुष्टगजो विशुद्धम् ॥ १.४९ ॥

अवैदिकं माध्यमिकं निरस्तं निरीक्ष्य तत्पक्षसुपक्षपाती ।
तमेव पक्षं प्रतिपादुकोऽसौ न्यरूरुपन्मार्गमिहानुरूपम् ॥ १.५० ॥

असत्पदेऽसन् सदसद्विविक्तं मायाख्यया संवृतिमभ्यधत्त ।
ब्रह्माप्यखंडं बत शून्यसिद्ध्यै प्रच्छन्नबौद्धोऽयमतः प्रसिद्धः ॥ १.५१ ॥

यद् ब्रह्मसूत्रोत्करभास्करं च प्रकाशयंतं सकलं स्वगोभिः ।
अचूचुरद् वेदसमूहवाहं ततो महातस्करमेनमाहुः ॥ १.५२ ॥

स्वसूत्रजातस्य विरुद्धभाषी तद्भाष्यकारोऽहमिति ब्रुवन् यः ।
तं तत्क्षणाद् यो न दिधक्षति स्म स व्यासरूपो भगवान् क्षमाब्धिः ॥ १.५३ ॥

निगमसन्मणिदीपगणोऽभवत् तदुरुवाग्गणपंकनिगूढभाः ।
अविदुषामिति संकरताकरः स किल संकर इत्यभिशुश्रवे ॥ १.५४ ॥

विश्वं मिथ्या विभुरगुणवानात्मनां नास्ति भेदो ।
दैत्या इत्थं व्यदधत गिरां दिक्षु भूयः प्रसिद्धिम् ॥
आनंदाद्यैर्गुरुगुणगणैः पूरितो वासुदेवो ।
मंदंमंदं मनसि च सतां हंत नूनं तिरोऽभूत् ॥ १.५५ ॥

**॥ इति श्रीमत्कविकुलतिलक त्रिविक्रमपंडिताचार्यसुत**
**नारायणपंडिताचार्यविरचिते श्रीमत्सुमध्वविजये**
**महाकाव्ये आनंदांके प्रथमः सर्गः ॥**

## २. द्वितीयः सर्गः

विज्ञानभानुमति कालबलेन लीने
दुर्भाष्यसंतमससंतततितो जनेऽंधे ।
मार्गात् सतां स्खलति खिन्न हृदो मुकुंदं
देवाश्चतुर्मुखमुखाः शरणं प्रजग्मुः ॥ २.१ ॥

नाथः कलौ त्रियुगहूतिरनुद्बुभूषुः
ब्रह्माणमप्यनवतारमनादिदिक्षुः ।
सर्वज्ञमन्यमनवेक्ष्य स कार्यवीर्यं
स्मेराननो भुवनजीवनमाबभाषे ॥ २.२ ॥

वेदांतमार्गपरिमार्गणदीनदूनाः
दैवीः प्रजा विशरणाः करुणापदं नः ।
आनंदयेः सुमुख भूषितभूमिभागो
रूपांतरेण मम सद्गुणनिर्णयेन ॥ २.३ ॥

आदेशमौलिमणिमुज्ज्वलवर्णमेनं
बद्धांजलिर्मरुदनर्घमधत्त मूर्ध्ना ॥
हारावळीमिव हृदा विबुधेंद्रयाच्ञां
बिभ्रन्निजाननुजिघृक्षुरवातितीर्षत् ॥ २.४ ॥

कालः स एव समवर्तत नाम यावत्
चिंताकुलं विविधसाधुकुलं बभूव ।
वेदांतसंततकृतांतरसं न विद्मः
श्रेयो लभेमहि कथं नु वयं बतेति ॥ २.५ ॥

तत्प्रीतये रजतपीठपुराधिवासी देवो
विवेश पुरुषं शुभसूचनाय ।
प्राप्ते महाय महिताय महाजनौघे
कोलाहलेन सकुतूहलिनि प्रवृत्ते ॥ २.६ ॥

आविष्टवानकुशलं पुरुषं प्रकृत्या
प्रत्याययन्निह जनान् नितरामनृत्यत् ।
उत्तुंगकेतुशिखरे स कृतांगहारो
रंगांतरे नट इवाखिलविस्मयात्मा ॥ २.७ ॥

आभाष्य सोऽत्र जनतां शपथानुविद्धं
उच्चैरिदं वचनमुद्धृतदोर्बभाषे ।
उत्पत्स्यते जगति विश्वजनीनवृत्तिः
विश्वज्ञ एव भगवानचिरादिहेति ॥ २.८ ॥

सद्वीपवारिनिधिसप्तकभूतधात्र्या
मध्येऽपि कर्मभुवि भारत नाम खंडे ।
काले कलौ सुविमलान्वयलब्धजन्मा
सन्मध्यगेहकुलमौलिमणिर्द्विजोऽभूत् ॥ २.९ ॥

वेदाद्रिसद्रजयपीठपुरेश्वराभ्यां
ग्रामो विभूषिततरः शिवरूप्यनामा ।
हेमाद्रिराजविभुराजदिळावृताभः तस्या–
भवद् गुरुगुणः खलु मूलभूमिः ॥ २.१० ॥

रामाधिवेशितहरिस्वसृमौलिमाला–
राजद्विमानगिरिशोभितमध्युवास ।
क्षेत्रं स पाजकपदं त्रि कुलैककेतुः
कं यद् दधाति सततं खलु विश्वपाजात् ॥ २.११ ॥

अर्थं कमप्यनवमं पुरुषार्थ हेतुं
पुंसां प्रदातुमुचितामुचितस्वरूपाम् ।
कन्यां सुवर्णलसितामिव वेदविद्यां
जग्राह विप्रवृषभ प्रतिपादितां सः ॥ २.१२ ॥

रेमेऽच्छयोपनिषदेव महाविवेको
भक्त्येव शुद्धकरणः परमश्रिताऽलम् ।
मिथ्याभिमानरहितः परयेव मुक्त्या
स्वानंदसंततिकृता स तया द्विजेंद्रः ॥ २.१३ ॥

तस्य प्रभोश्चरणयोः कुलदेवतायाः
भक्तिं बबंध निजधर्मरतः स धीरः ।
विज्ञातभारतपुराणमहारहस्यं
यं भट्ट इत्यभिवदंति जना विनीतम् ॥ २.१४ ॥

गोविंदसुंदरकथासुधया स नृणां
आनंदयन्न किल केवलमिंद्रियाणि ।
किंतु प्रभो रजतपीठपुरे पदाब्जं
श्रीवल्लभस्य भजतामपि दैवतानाम् ॥ २.१५ ॥

इत्थं हरेर्गुणकथासुधया सुतृप्तो
नैर्गुण्यवादिषु जनेष्वपि साग्रहेषु ।
तत्वे स कालचलधीरतिसंशयालुः धीमान्
धिया श्रवणशोधितया प्रदध्यौ ॥ २.१६ ॥

त्राता य एव नरकात् स हि पुत्रनाम
मुख्यावनं न सुलभं पुरुषादपूर्णात् ।
तस्मात् समस्तविदपत्यमवद्यहीनं
विद्याकराकृति लभेमहि कैरुपायैः ॥ २.१७ ॥

पूर्वेऽपि कर्दमपराशरपांडुमुख्याः
यत्सेवया गुणगणाढ्यमपत्यमापुः ।
तं पूर्णषड्गुणतनुं करुणामृताब्धिं
नारायणं कुलपतिं शरणं व्रजेम ॥ २.१८ ॥

इत्थं विचिंत्य स विचिंत्यमनन्य बंधुः
प्रेष्ठप्रदं रजतपीठपुराधिवासम् ।
भक्त्या भवाब्धिभयभंगदया शुभात्मा
भेजे भुजंगशयनं द्विषडब्दकालम् ॥ २.१९ ॥

पत्न्या समं भगवतः स भजन् पदाब्जं
भोगान् लघूनपि पुनर्लघयांचकार ।
दांतं स्वयं च हृदयं दमयांचकार
स्वच्छं च देहमधिकं विमलीचकार ॥ २.२० ॥

तीव्रैः पयोव्रतमुखैर्विविध व्रताग्र्यैः
जायापती गुणगणार्णवपुत्रकामौ ।
संपूर्णपूरुषमतोषयतां नितांतं
देवेरिताविव पुराऽदितिकश्यपौ तौ ॥ २.२१ ॥

नाथस्य भूरिकरुणासुधयाऽभिषिक्तौ
श्रीश्रीधरप्रततिशारशरीरयष्टी ।
भूरिव्रतप्रभवदिव्यसुकांतिमंतौ
तौ देहशुद्धिमतिमात्रमथालभेताम् ॥ २.२२ ॥

कांतादृतौ समुचितेऽथ बभार गर्भं
सा भूसुरेंद्रदुहिता जगतां हिताय ।
अच्छांबरेव रजनी परिपूरिताशा
भाविन्यपास्ततमसं विधुमाद्यपक्षात् ॥ २.२३ ॥

तं पूर्वपक्षसितबिंबमिव प्रवृद्धं
यावद् द्विजेंद्रवनिता सुषुवेऽत्र तावत् ।
अंशेन वायुरवतीर्य स रूप्यपीठे
विष्णुं प्रणम्य भवनं प्रययौ तदीयम् ॥ २.२४ ॥

संपूर्णलक्षणचणं नवराजमान
द्वारांतरं परमसुंदरमंदिरं तत् ।
राजेव सत्पुरवरं भुवनाधिराजो
निष्कासयन् परमसौ भगवान् विवेश ॥ २.२५ ॥

संतुष्यतां सकलसन्निकरैरसद्भिः
खिद्येत वायुरयमाविरभूत् पृथिव्याम् ।
आख्यानितीव सुरदुंदुभिमंद्रनादः
प्राश्रावि कौतुकवशैरिह मानुषैश्च ॥ २.२६ ॥

नाथं निषेव्य भवनानतिदूरमाप्तः
प्राज्ञो महप्रकृतदुंदुभिनादपूर्वात् ।
पुत्रोद्भवश्रवणतो महदाप्य सौख्यं
ज्ञानं परोक्षपदमप्यमतेष्टहेतुम् ॥ २.२७ ॥

आविश्य वेष्म निजनंदनमिंदुवक्त्रं
भूयोऽभिनंद्य स मुकुंददयां प्रवंद्य ।
जातस्य तस्य गुणजातवहस्य जात–
कर्मादिकर्मनिवहं विदधे सुकर्मा ॥ २.२८ ॥

ज्ञानार्थमेव यदभूदसुदेव एषः
यद् वासुदेवपदभक्तिरतः सदाऽसौ ।
तद् वासुदेवपदमन्ववदन् सुरेंद्राः
तातेन यन्निगदितं सुतनामकर्त्रा ॥ २.२९ ॥

पातुं पयांसि शिशवे किल गोप्रदोऽस्मै
पूर्वालयः स्वसुतसूनुतया प्रजातः ।
निर्वाणहेतुमलभिष्ट परात्मविद्यां
दानं ध्रुवं फलति पात्रगुणानुकूल्यात् ॥ २.३० ॥

अत्रस्तमेव सततं परिफुल्लचक्षुः
कांत्या विडंबितनवेंदु जगत्यनर्घम् ।
तत् पुत्ररत्नमुपगृह्य कदाचिदाप्तः
स्वस्वामिने बुध उपायनमार्पयत् सः ॥ २.३१ ॥

नत्वा हरिं रजतपीठपुरालयं
तं बालस्य संपदमनापदमर्थयित्वा ।
साकं सुतेन परिवारजनान्वितोऽसौ
प्रायान्निशीथसमये निजमेव धाम ॥ २.३२ ॥

दोषेयुषां सममनेन वनेऽतिभीमे
तत्क्रीडितग्रह इहैकतमं तुतोद ।
उद्भ्रांतरक्तमवलोक्य तमभ्यधायि
केनाप्यहो न शिशुतुत् कथमेष इत्थम् ॥ २.३३ ॥

आविश्य पूरुषमुवाच महाग्रहोऽसौ
अस्मद्विहारसमयोपगतान् समस्तान् ।
यच्छक्तिगुप्तिरहितानलमस्मि हंतुं
लोकेश्वरः स बत बालतमः किलेति ॥ २.३४ ॥

स्तन्येन बालमनुतोष्य मुहुः स्वधाम्नो
माता कदाचन ययौ विरहासहाऽपि ।
विश्वस्य विश्वपरिपालकपालनाय
कन्यां निजामनुगुणां किल भीरुरेषा ॥ २.३५ ॥

सा बालकं प्ररुदितं परिसांत्वयंती
मुग्धाक्षरेण वचसाऽनुनिनाय मुग्धा ।
मा तात तात सुमुखेति पुनः प्ररोदीः
माता तनोति रुचितं त्वरितं तवेति ॥ २.३६ ॥

रोदे क्रियासमभिहारत एव वृत्ते
पोतस्य मातरि चिरादपि नाऽगतायाम् ।
जग्राह बालमथ चैक्षत मातृमार्गं
साऽपि क्रियासमभिहारत एव बाला ॥ २.३७ ॥

कर्तव्यमौढ्यमभिपद्य निरूप्य सा तं
प्राभोजयत् खलु कुलस्थकुलं प्रपक्वं ।
शीतं पयोऽपि सततं परिपाययंती
यस्योष्णरोगमतिवेलमशंकतांबा ॥ २.३८ ॥

नूनं पिपासुरतिरोदिति हंत बालो
धिङ् मां दयाविरहितां परकृत्यसक्ताम् ।
इत्याकुला गृहमुपेत्य तदा प्रसन्नं
पूर्णोदरं सुतमवैक्षत विप्रपत्नी ॥ २.३९ ॥

पृष्ट्वाऽवगम्य सकलं च ततः प्रवृत्तं
यूनां च दुस्सहमिदं शिशुनोपभुक्तम् ।
इत्थं विचिंत्य तनयां बहु भत्सयंत्या
भीतं तयोत कुपितं मनसाऽनुतप्तम् ॥ २.४० ॥

आरोग्यशालिनि तदाऽपि पुरेवपुत्रे
विस्मेरतामुपजगाम जनन्यमुष्य ।
यस्य त्रिलोकजननी जननी विषेऽपि
पीते न विस्मयमवाप समस्तशक्तेः ॥ २.४१ ॥

स्तन्यं मुहुः किल ददौ जननी गृहीत्वा
क्षेमाय तं किल दधज्जनको जजाप ।
अन्यो जनोऽपि किल लाळयति स्म किंतु
सर्वोऽपि तन्मुखसुहासरसायनोत्कः ॥ २.४२ ॥

देवादिसद्भिरनुपालितयाऽऽदरेण
देव्याऽऽत्मनेव विलसत्पदया नितांतम् ।
अव्यक्तया प्रथमतो वदनेऽस्य वाण्या
शालीनयेव भुवनार्चितया विजह्रे ॥ २.४३ ॥

प्राग्रिंखणं स्वयमथ स्थितिमेष
चक्रे पश्चाद् गतिं परिचयेन किल क्रमेण ।
विश्वस्य चेष्टितमहो यदनुग्रहेण
सर्वं तदस्य पवनस्य विडंबनं हि ॥ २.४४ ॥

पुच्छांतमच्छमवलंब्य कदाचिदेष
प्रातर्व्रजाद् व्रजत एव निजर्षभस्य ।
प्रायात् प्रियस्य सहसा स्वजनैरदृष्टो
नानावनेषु चरतश्चरतस्तृणानि ॥ २.४५ ॥

उत्तुंगशृंगलसितस्य महिष्ठमूर्तेः
पादावृतावनितळस्य सुरंध्रकस्य ।
आश्रित्य तस्य शुशुभेऽवयवैकदेशं
बालो दिवाकर इवोदयपर्वतस्य ॥ २.४६ ॥

लीलां करोति नु गृहांतरगो नु बालः
कूपांतरे नु पतितः प्रकृतिस्वतंत्रः ।
इत्थं विचिंत्य स मुहुः स्वजनो विमृग्य
हंतानवेक्ष्य तनयं हृदि तापमाप ॥ २.४७ ॥

बालस्य बालपरिलंबनगोचरं तद्
व्यश्वस्यतापि वचनं वनगोचरोक्तम् ।
यत् सायमैक्षत जनः शिशुमाव्रजंतम्
एकाब्दकं वृषभबालकृतावलंबम् ॥ २.४८ ॥

चिंतामणींद्रमिव चिंतितदं दरिद्रो
विज्ञानमार्गमिव विष्णुपरं मुमुक्षुः ।
नष्टं च नंदनमिति स्वजनोऽस्य लब्ध्वा
नाथस्य तस्य तमनुग्रहमेव मेने ॥ २.४९ ॥

लीलावसानसमये सहसा कदाचिद्
आर्योऽमुनाऽभ्यवहृतिं प्रति चोद्यमानः ।
रोद्धैष नोऽस्ति धनिको वृषविक्रयीति
प्रोवाच नंदनमुखेंदुमवेक्ष्य मंदम् ॥ २.५० ॥

लीलाकरेण स करेण सुकोमलेन
बीजांतराणि किल कानिचिदाशु तस्मै ।
स्मित्वाऽर्भकोऽभिमतनिष्कपदे यदाऽदा-
दादत्त तानि धनिको बहुमानपूर्वम् ॥ २.५१ ॥

लब्धं सुतादिति वदन् द्विजपुंगवेन
कालांतरे निजधने प्रतिदित्सितेऽपि ।
साक्षादमानवनवाकृतितः स लेभे
बीजच्छलेन पुरुषार्थमहो विशिष्टम् ॥ २.५२ ॥

वासुदेवमिह वाऽसुदेवता सत्कलामभिननंद तं जनः ।
वासुदेवमिति वासुदेवसन्नामकं विविधलीलमर्भकम् ॥ २.५३ ॥

इति विहरति मह्यां विष्णुदासेऽपि गूढे
समजनि सुजनानां चित्तमानंदपूर्णम् ।
उदयति घनमालालीनभानौ च भानौ
ननु जननयनाब्जैर्लभ्यतेऽलं विकासः ॥ २.५४ ॥

**॥ इति श्रीमत्कविकुलतिलक त्रिविक्रमपंडिताचार्यसुत**
**नारायणपंडिताचार्यविरचिते श्रीमत्सुमध्वविजये**
**महाकाव्ये आनंदांके द्वितीयः सर्गः ॥**

## ३. तृतीयः सर्गः

अथ कदाचन सुंदरनंदनस्मितमुखेंदुदृशां दयितौ नृणाम् ।
महमतो निजबंधुमुदे मुदा प्रययतुः स्वजनैः सह दंपती ॥ ३.१ ॥

स्वजनतापगमागमसंगमप्रतिसभाजितपूर्वकसंभ्रमे ।
अविदुषी जननीति स बालकः शरणतो रणतो निरगान्नभिः ॥ ३.२ ॥

क्व नु यियासससि तात न सांप्रतं स्वजनसंत्यजनं तव सांप्रतम् ।
इति विभुः पथिकैरुदितो व्रजन् स्मितमनाकुलमुत्तरमातनोत् ॥ ३.३ ॥

त्वरितमेत्य स काननदेवतासदनमत्र ननाम रमापतिम् ।
अपि ततः प्रगतो लघु नाळिकेयुपपदांतरसद्मगतं च तम् ॥ ३.४ ॥

नळिननाभनिभालनसंमदागमविकस्वरभास्वरलोचनः।
जनमनोनयनांबुजभास्करो रजतपीठपुरं प्रययावसौ ॥ ३.५ ॥

सुहयमेधगणातिशयालवो हरिनमस्कृतयः सुकृता इमाः
इति सुरैरपि भूसुरमंडलैः समनमत् स सविस्मयमीक्षितः ॥ ३.६ ॥

न हि हरिं सततं न नमत्यसौ न च न पश्यति नापि न वंदते ।
अपि तथेति विधाय विशेषतः स ननु साधुजनान् समशिक्षयत् ॥ ३.७ ॥

अनवलोक्य सुतं सुतवत्सलो मृगयते स्म महीसुरपुंगवः ।
मुहुरपृच्छदमुष्य गतिं नरान् पथि पथि प्रगतोनुपदं द्रुतम् ॥ ३.८ ॥

जनसदागतिसूचितवर्त्मना प्रतिपदं व्रजता परया तृषा ।
द्विजमहामधुपेन मनोहरं स्मितमलाभि सुताननवारिजम् ॥ ३.९ ॥

विरहदूनतयोद्गमनोन्मुखं न्यरुणदश्रु पुरा स ययोर्दृशोः ।
अथ तयोः प्रमदोत्थितमप्यदः प्रतिनिरुद्ध्य गिरं गुरुरब्रवीत् ॥ ३.१० ॥

अयि सुतेदमुदाहर तत्वतो ननु समागतवानसि सांप्रतम् ।
स्वजनतारहितस्य तु कोऽत्र ते सहचरोऽर्भक दीर्घतमे पथि ॥ ३.११ ॥

जनकवाचमिमामवधारयन् कळमुदाहरदंबुरुहेक्षणः ।
स्वपदमाव्रजतो व्रजतोऽप्यतॊ ननु सखा मम काननगो विभुः ॥ ३.१२ ॥

तदितरायतनात्तु यदाऽगमं कृतरतिः खलु तत्र हरिः सखा
अहमिहापि महेंद्रदिगालयं प्रणतवानुत यावदधीश्वरम् ॥ ३.१३ ॥

अपि ततोऽहमुपेत्य सहामुना भगवतेऽत्र सते प्रणतिं व्यधाम् ।
इति निगद्य विभाति शिशुः स्म विस्मितसभाजनचीर्णसभाजनः ॥ ३.१४ ॥

विरहितस्वजनं चरणप्रियं विविधभूतभयंकरवर्त्मनि ।
अयि कृपालय पालय बालकं लघुशुभस्य ममेत्यनमद् द्विजः ॥ ३.१५ ॥

तमुपगृह्य सुतं सुतपोनिधिः गृहमसौ गृहिणीसहितो ययौ ।
उदयतीति हि बालदिवाकरे स्मितमभूत् सुजनाननवारिजम् ॥ ३.१६ ॥

वरविमानगिरावपि चंडिका शिशुमहो जननी तमलाळयत् ।
अपरथा परितुष्टमनाः कथं चिरमिहैष वसेद् विसहायकः ॥ ३.१७ ॥

सकलशब्दमयी च सरस्वती सततमानमति स्वयमेव यम् ।
द्विजवरोऽथ कदाचन मातृकाः किल सुतं परिचाययति स्मतम् ॥ ३.१८ ॥

लिपिकुलं ननु तात गते दिने लिखितमेव पुनर्लिखितं कुतः ।
इति निजप्रतिभागुणभावितं हरिपदस्य वचस्तमनंदयत् ॥ ३.१९ ॥

शिशुरसौ प्रतिभांबुधिरित्यलं जनमनोवचनग्रहपीडना ।
न भवतादिति तं विजनस्थले स्वतनयं समशिक्षयदेषकः ॥ ३.२० ॥

महवता स्वजनेन समीरितस्वजननीसहितेन कदाचन ।
रुचिरवाचनयाऽर्चितवाक्छ्रिया प्रतियये प्रभुणा घृतवल्ल्यपि ॥ ३.२१ ॥

परिषदा नितरां परिवारितः शिवपदः किल धौतपटोद्भवः ।
इह कथां कथयन् ददृशे ततः पृथुधिया पृथुकाकृतिनाऽमुना ॥ ३.२२ ॥

इदमुवाच विचारविचक्षणः शुचि वचः शनकैः स जनांतरे ।
अपरथा कथितं कथक त्वया ननु मतान्महतामिति सस्मितम् ॥ ३.२३ ॥

अगणयन्न शिवं जनता तदा सवचने वसुदेवसुताह्वये ।
मुखरमिच्चति को मृगधूर्तकं प्रकृत हुंकृत सिंह शिशौ सति ॥ ३.२४ ॥

अथ कथं कथयेति तदा जने गदितवत्युचितार्थमुदाहरन् ।
स समलाळ्यत विस्मयीभिर्नरैः अपि सुरैर्विजयांकुरपूजकैः ॥ ३.२५ ॥

स जननीसहितो जनकं गृहे प्रगतवांस्तमुदंतमवेदयत् ।
निगद तात शिवः कथकः स किं वितथगीरथवाऽहमितीरयन् ॥ ३.२६ ॥

ननु सुतावितथं कथितं त्वयेत्यमुमुदीर्य सविस्मयमस्मरत् ।
प्रकृतितः कृतिता खलु मे शिशोः मदधिनाथदयोदयजेत्यसौ ॥ ३.२७ ॥

कथयतां प्रथमे कथयत्यलं स्वजनके जनसंघवृते कथाम् ।
सकललोकमनोनयनोत्सवः चतुरधीः स कदाचिदवाचयत् ॥ ३.२८ ॥

विविधशाखिपदार्थनिवेदने लिकुचनाम्नी तदाऽनुदितार्थके ।
किमिति तात तदर्थमवर्णयन् कथयसीति शनैरयमब्रवीत् ॥ ३.२९ ॥

अवदतीति पितर्यपि चोदिते प्रतिबुभुत्सुषु तत्र जनेष्वपि
अयमुदीर्य तदर्थमवाप्तवान् परिषदो ह्यसमानसुमाननाम् ॥ ३.३० ॥

बहुविधैश्चरितैरिति चारुभिः सकललोककुतूहलकारिणम् ।
द्विजवरेण वयस्युचिते स्थितं तमुपनेतुमनेन दधे मनः ॥ ३.३१ ॥

समुचितग्रहयोगगुणान्वितं समवधार्य मुहूर्तमदूषणम् ।
प्रणयबंधुरबांधववानसौ द्विजकुलाकुलमुत्सवमातनोत् ॥ ३.३२ ॥

विविधवेदतया विजिहीर्षवो वदनरंगपदेस्य चिराय याः ।
सुरवरप्रमदा अपि सप्रिया अभिननंदुरहो वियतो महम् ॥ ३.३३ ॥

विहितसाधनसाधितसत्क्रियोज्वलनमुज्ज्वलधीर्ज्वलयन्नयम् ।
उपनिनाय सुतं सुकुमारकं कुशलिनं कुशलीकृतशीर्षकम् ॥ ३.३४ ॥

परिचराग्निगुरू चरितव्रतः सुचरणः पठ साधु सदागमान् ।
इति गुरोस्त्रिजगद्गुरुशिक्षणे स्फुटमहासि सुरैः कृतसाक्षिभिः ॥ ३.३५ ॥

जितकुमारगुणं सुकुमारकं निजकुमारमवेक्ष्य निरंतरम् ।
समुचिताचरणे चतुरं स्वतः क्षितिसुरो मुदमायत शिक्षयन् ॥ ३.३६ ॥

सपटखंडमकिंचनवत् क्वचित् स्वविभवानुचितं चरणादिकम् ।
भुवनभर्तुरहो स्वनिगूहनं सुरसभासु कुतूहलमातनोत् ॥ ३.३७ ॥

अविरळैर्गरळोष्मभिराकुली कृतसमस्तजनो विचचार यः ।
क्वचिदमुं निजघांसुरशांतिमानुपससर्प स सर्प मयोऽसुरः ॥ ३.३८ ॥

त्वरितमुद्यतविस्तृतमस्तकः प्रतिददंश यदैनमविक्षतम् ।
प्रभुपदारुणचारुतरांगुलीविहतिपिष्टतनुः प्रतताम सः ॥ ३.३९ ॥

गरुडतुंडमिव प्रतिपन्नवान् द्विजकुमारपदं स ममार च ।
समुचितं चरितं महतामिदं सुमनसो मनसेष्टमपूजयन् ॥ ३.४० ॥

गिरिशगुर्वमरेंद्रमुखैश्च यच्चरणरेणुरधारि सुरेश्वरैः ।
क्षितिसुरांघ्र्यभिवंदनपूर्वकं स विदधेऽध्ययनं छलमानुषः ॥ ३.४१ ॥

करतळे खलु कंदुकवत् सदा सकलया कलया सह विद्यया ।
अरिधरेण समं स्फुरितं गुरोः मनसि तस्य विडंबयतो जनान् ॥ ३.४२ ॥

अनधिकैरधिकैश्च वयस्यथो बहुभिरध्ययनोपरमांतरे ।
अनिकटे वटुभिः पटुभिर्गुरोः स विजहार सुखी सखिभिः समम् ॥ ३.४३ ॥

पदमुदीर्य जवेन यियासितं द्रुतसखिष्टभवत् स पुरस्सरः ।
अयमयत्नतयेति न विस्मयो ननु मनोजवजित् पवनोऽसकौ ॥ ३.४४ ॥

प्लवनतेजसि हंत न केवलं विजितवान् स तदा सकलान् जनान् ।
प्रभुनिदेशकरो हनुमत् तनौ ननु जिगाय स वालिसुतादिकान् ॥ ३.४५ ॥

जलविहारपराजयिभिः स्पृधा सखिभिरीरितवारिपरिश्रितम् ।
वदनमाकुललोचनमादधे स्मितममुष्य हि कंचन विभ्रमम् ॥ ३.४६ ॥

स शनकैर्बलिनो युगपद्गतान् प्रविहृतेषु सखीन् निरपातयत् ।
अशनकैर्युगपत् प्रकृताहवान् सहसितो द्विजसूनुरयत्नवान् ॥ ३.४७ ॥

ग्रहण निग्रहणे ग्रहणे दृढे गुरुभरोद्धरणादिविधौ पटौ ।
इह विभावुपचारधिया नृणां ऋतमयं ननु भीम इतीरितम् ॥ ३.४८ ॥

विहरतीति पठत्यपि न स्फुटं स्वगृहगामिनि चाद्भुतमायति ।
परितुतोष न तत्र जगद्गुरौ स किल पूगवनान्वयजो द्विजः ॥ ३.४९ ॥

अथ कदाचन सोऽध्ययनांतरे तमवदत् कुपितोऽन्यमनस्विनम् ।
पठसि नो शठ ते सखिभिः समं किमिति नित्यमुदासितधीरिति ॥ ३.५० ॥

गुणनिका चरणादिकगोचरा न मम हृद्दयितेत्युदितेऽमुना ।
वद विशारदवाद यथेप्सितं त्वमुपरीत्यवदद्धरणीसुरः ॥ ३.५१ ॥

सकललक्षणशिक्षणमूलभूः श्रुतिसमामननं स्खलनोज्झितम् ।
न खलु केवलमस्य गुरोर्व्यधात् सुमनसामपि तत्र कुतूहलम् ॥ ३.५२ ॥

प्रियवयस्यशिरोगुरुवेदनां अशमयत् सहजामपि दुस्सहाम् ।
स विपिने विजने मुखवायुना श्रवण गोचरितेन कदाचन ॥ ३.५३ ॥

अधिगतोपनिषच्च सकृच्छ्रुता प्रकटभागवतीति न विस्मयः ।
अधिगता ननु जात्वपि न श्रुताः प्रतिभया श्रुतयः शतशोऽमुना ॥ ३.५४ ॥

साक्षादथोपनिषदो विभुरैतरेय्याः
पाठच्छलेन विजनेऽर्थरसं ब्रुवाणः ।
अध्यापकाय विततार विमोक्षबीजं
गोविंदभक्तिमुचितां गुरुदक्षिणां सः ॥ ३.५५ ॥

अयि स्वामिन् दुष्टान् दमयदमय स्पष्टमुचिराद्
गुणान् गूढान् विष्णोः कथयकथय स्वान् प्रमदयन् ।
तदाऽऽनंदं तन्वन्निति सुमनसां सोऽनुसरता
मनुज्ञामादत्त त्रिभुवनगुरुर्ब्राह्मणगुरोः ॥ ३.५६ ॥

**॥ इति श्रीमत्कविकुलतिलक त्रिविक्रमपंडिताचार्यसुत**
**नारायणपंडिताचार्यविरचिते श्रीमत्सुमध्वविजये**
**महाकाव्ये आनंदांके तृतीयः सर्गः ॥**

## ४. चतुर्थः सर्गः

अथैष सल्लोकदयासुधार्द्रया सदागमस्तेननिरासकामया ।
रमावरावासभुवा विशारदो विशालयाऽचिंतयदात्मनो धिया ॥ ४.१ ॥

अनन्यसंगाद् गुणसंगिता हरेर्जनस्य मानं तु विशिष्टचेष्टितम् ।
असंगमस्मात् प्रकटीकरोम्यहं निजं भजन् पारमहंस्यमाश्रमम् ॥ ४.२ ॥

मम प्रभोर्नापरथा हि शोभते द्विषत्सु विष्णुं यददंडधारणम् ।
हरिस्वसा नन्वचिरादसद्भिदे भवेदतो नास्मिच दंडधारकः ॥ ४.३ ॥

विचिंतयन्नित्थमनंतचिंतकः समस्तसंन्यासनिबध्धनिश्चयः ।
असावनुज्ञार्थमथानमद्धरिं समस्तसंव्यापिनमात्मदायगम् ॥ ४.४ ॥

निजे जने किं नमसीति पृच्छति ब्रुवन् स्वसस्तुप्रणतिं व्यधामिति ।
गुरो किलान्वेषणवान् जगद्गुरुः तदा जगामाखिललोकशिक्षकः ॥ ४.५ ॥

यतिर्यतात्माभुवि कश्चनाभवद्विभूषणो भूरिविरक्तिभूषणः ।
न नाममात्राच्छुचिमर्थतोऽपियं जनोऽच्युतप्रेक्षमुदाहरत् स्फुटम् ॥ ४.६ ॥

पुरैष कृष्णाकरसिद्धशुद्धिमद्वरान्नभुक्त्या किल पांडवालये ।
विशोधितात्मा मधुकृत्प्रवृत्तिमान्चचार कांश्चित् परिवत्सरान् मुदा ॥ ४.७ ॥

अभूत् कुशास्त्राभ्यसनं न पातकं क्रमागताद् विप्रतिसारतो यतेः ।
यथा कुशास्त्राध्यसनं मुरद्विषः पदांबुजे व्याधवरस्य गर्हितम् ॥ ४.८ ॥

विनीतमांनायशिरोविशारदं सदैव तत्त्वं प्रबुभुत्सुमादरात् ।
गुरुर्विदित्वोपनतां निजां मृतिं कदाचिदूचे तमुपह्वरे गिरम् ॥ ४.९ ॥

अहं स्वयं ब्रह्मन किंचिदस्ति मत् परं विजृंभेत यदा स्फुटं चितिः ।
इतीह मायासमयोपपादितं निरन्वयात् सुव्रत मा स्म विश्वसीः ॥ ४.१० ॥

यदेतदात्मैक्यमुपास्तिचोदितं न मे गुरोरप्यपरोक्षतां गतम् ।
पुरातनानामपि सौम्य कुत्रचित् ततो मुकुंदं भज संविदे मुदा ॥ ४.११ ॥

इतीदमादिश्य वचो वचस्विनि स्वके गुरौ लोकमथान्यमीयुषि ।
असेवताऽलोच्य मुहुर्गुरोर्गिरं स रूप्यपीठालयमिंदिरावरम् ॥ ४.१२ ॥

सुभक्तिना तेन स भक्तवत्सलो निषेवितस्तत्र परं बुभुत्सुना ।
भविष्यतः शिष्यवराब्धि विद्धि माम् इति प्रविष्टः पुरुषं तमभ्यधात् ॥ ४.१३ ॥

प्रतीक्षमाणं तमनुग्रहं मुदा निषेवमाणं पुनरंबुजेक्षणम् ।
सतां गुरुः कारणमानुषाकृतिः यतिं प्रशांतं तमुपाससाद सः ॥ ४.१४ ॥

सुतं यतींद्रानुचरं विरागिणं निशम्य संन्यासनिषण्णमानसम् ।
सुवत्सलौ रूप्यतळालयस्थितं वियोगतांतौ पितरौ समीयतुः ॥ ४.१५ ॥

वराश्रमस्ते जरतोरनाथयोर्न जीवतोः स्यादयि नंदनावयोः ।
सयाचनं वाक्यमुदीर्य ताविदं परीत्य पुत्राय नतिं वितेनतुः ॥ ४.१६ ॥

नतिर्न शुश्रूषुजनाय शस्यते नतं भवद्भ्यां स्फुटमत्र संप्रतम् ।
अहो विधात्रा स्वयमेव दापिता तदभ्यनुज्ञेति जगाद स प्रभुः ॥ ४.१७ ॥

अनुत्तरज्ञः स तमर्थयन् पुनः यतींद्रमानम्य गतः प्रियायुतः ।
गृहे वसन् कल्पसमान् क्षणान् नयन् सुताननेंदोरनिशं ततोऽस्मरत् ॥ ४.१८ ॥

स चिंतयन् पुत्रमनोरथं शुचा पुनश्च तीर्त्वोपगतो महानदीम् ।
यतीश्वरानुव्रतमात्मनंदनं तमैक्षत ग्रामवरे मठांतरे ॥ ४.१९ ॥

स जातकोपाकुलितो धरासुरो महात्मनाम् लंघनभीरुरप्यलम् ।
सुतस्य कौपीनधृतौ हि साहसप्रतिश्रवो मे दृढ इत्यभाषत ॥ ४.२० ॥

क्षणेन कौपीनधरो निजं पटं विदार्य हे तात कुरुष्व साहसम् ।
इतीममुक्त्वा प्रभुरब्रवीत् पुनः शुभांतरायं न भवांश्चरेदिति ॥ ४.२१ ॥

न पुत्र पित्रोरवनं विना शुभं वदंति संतो ननु तौ सुतौ मृतौ ।
निवर्तमाने न हि पालकोऽस्ति नौ त्वयीति वक्तारममुं सुतोऽब्रवीत् ॥ ४.२२ ॥

यदा विरक्तः पुरुषः प्रजायते तदैव संन्यासविधिः श्रुतौ श्रुतः ।
न संगहीनोऽपि परिव्रजामि वाम् अहं तु शुश्रूषुमकल्पयन्निति ॥ ४.२३ ॥

बहुश्रुतत्वाद्यदि तत् सहे बलात् न सा सवित्री विरहं सहेत ते ।
इति द्विजेनाभि हितेऽनमत् स तं भवाननुज्ञां प्रददात्विति ब्रुवन् ॥ ४.२४ ॥

विचिंत्य विद्वान् स निरुत्तरीकृतः तथाऽस्तु माताऽनु वदेद् यदीति तम् ।
उदीर्य कृच्छ्रादुपगम्य मंदिरं प्रियासकाशे तमुदंतमब्रवीत् ॥ ४.२५ ॥

निशाचरारेरिव लक्ष्मणः पुरा वृकोदरस्येव सुरेंद्रनंदनः ।
गदोऽथ शौरेरिव कर्मकृत् प्रियः सुभक्तिमान् विश्वविदोऽनुजोऽभवत् ॥ ४.२६ ॥

कदाचिदाप्याऽलयबुद्धिरालयं निवेदयन् पालकमेतमेतयोः ।
दृढस्वसंन्यासनिषेधनिश्चयां धवानुमत्येदमुवाच मातरम् ॥ ४.२७ ॥

वराश्रमाप्तिं मम संवदस्व मां कदाचिदप्यंब यदीच्छसीक्षितुम् ।
यदन्यथा देशमिमं परित्यजन् न जातु दृष्टेर्विषयो भवामि वः ॥ ४.२८ ॥

इति ब्रुवाणे तनये कदाचिदप्यदर्शनं तस्य मृतेर्निदर्शनम् ।
विचिंत्य पर्याकुलिता चिकीर्षितं सुतस्य कृच्छ्रान्न्यरुणन्न सा शुभा ॥ ४.२९ ॥

अथोपगम्यैष गुरुं जगद्गुरुः प्रसाद्य तं देववरप्रसादितः ।
सदा समस्ताश्रमभाक् सुरेश्वरो विशेषतः खल्वभजद्वराश्रमम् ॥ ४.३० ॥

क्रियाकलापं सकलं स कालविद् विधानमार्गेण विधाय केवलम् ।
सदा प्रसन्नस्य हरेः प्रसत्तये मुहुः समस्तन्यसनं समभ्यधात् ॥ ४.३१ ॥

अनंतमात्रांतमुदाहरंति यं त्रिमात्रपूर्वं प्रणवोच्चयं बुधाः ।
तदाऽभवद् भाविचतुर्मुखाकृतिः जपाधिकारी यतिरस्य सूचितः ॥ ४.३२ ॥

गुणानुरूपोन्नति पूर्णबोध इत्यमुष्य नाम द्विजवृंदवंदितः ।
उदाहरद् भूरियशा हि केवलं न मंत्रवर्णः स च मंत्रवर्णकः ॥ ४.३३ ॥

निरंगरागं मुखरागवर्जितं विभूषणं विष्टपभूषणायितम् ।
अमुं धृताषाढमवेक्ष्य मेनिरे स्वभावशोभाऽनुपमेति जंतवः ॥ ४.३४ ॥

भुजंगभूतेशविहंगपादिकैः प्रवंदितः सावसरप्रतीक्षणैः ।
ननाम सोऽयं गुरुपूर्वकान् यतीन् अहो महीयो महतां विडंबनं ॥ ४.३५ ॥

वराश्रमाचारविशेषशिक्षणं विधित्सुरस्याऽचरितं निशामयन् ।
विशेषशिक्षां स्वयमाप्य धीरधीः यतीश्वरो विस्मयमायताऽंतरम् ॥ ४.३६ ॥

स रूप्यपीठालयवासिने यदा ननाम नाथाय महामतिर्मुदा ।
तदाऽमुनाऽग्राहि नरप्रवेशिना भुजे भुजेऽनाशु भुजंगशायिना ॥ ४.३७ ॥

चिरात् सुतत्वं प्रबुभुत्सुना त्वया निषेवणं मे यदकारि तत्फलम् ।
इमं ददामीत्यभिधाय सोऽमुना तदा प्रणीय प्रददेऽच्युतात्मने ॥ ४.३८ ॥

अनुग्रहं तं प्रतिगृह्य साग्रहं मुदाऽऽत्मनाऽऽप्तां कृतकृत्यतां स्मरन् ।
अभूदसंगोऽपि स तत्सुसंगवान् असंगभूषा ननु साधुसंगिता ॥ ४.३९ ॥

यियासति स्वस्तटिनीं मुहुर्मुहुः नमत्यनुज्ञार्थिनि भूरिचेतसि ।
तमस्मरत् स्वामिनमेव दूनधीः गुरुर्भविष्यद्विरहाग्निशंकया ॥ ४.४० ॥

इतस्तृतीये दिवसे द्युनिम्नगा त्वदर्थमास्माकतटाकमाव्रजेत् ।
अतो न याया इति तं तदाऽवदत् प्रविश्य कंचित् करुणाकरो हरिः ॥ ४.४१ ॥

तदाज्ञयोपागतजाह्नवीजले जनोऽत्र सस्नौ सह पूर्णबुद्धिना ।
ततःपरं द्वादशवत्सरांतरे सदाऽऽव्रजेत् सा तदनुग्रहांकिनी ॥ ४.४२ ॥

गते दिनानां दशके समासके वराश्रमं प्राप्य सपत्रलंबनम् ।
जिगाय जैत्रान् बहुतर्ककर्कशान् स वासुदेवाह्वयपंडितादिकान् ॥ ४.४३ ॥

गुरोः स्वशिष्यं चतुरं चिकीर्षितः प्रचोदनात् श्रोतुमिहोप चक्रमे ।
अथेष्टसिद्धिश्फलजातिवारिधिः निरादरेणापि महात्मनाऽमुना ॥ ४.४४ ॥

तदाद्यपद्यस्थमवद्यमंडलं यदाऽवदत् षोडशकद्वयात्मकम् ।
उपर्यपास्तं तदिति ब्रुवत्यसौ गुरौ तमूचे प्रणिगद्यतामिति ॥ ४.४५ ॥

भवत्प्रवक्तृत्वसमर्थता न मे सकोपमित्थं वदति व्रतीश्वरे ।
अपीह मायासमये पटौ नृणां बभूव तद्दूषणसंशयांकुरः ॥ ४.४६ ॥

बुधोऽभिधानं श्रवणं बुधेतरो ध्रुवं विदध्याद् विमुमुक्षुरात्मनः ।
यतिर्विशेषादिति लोकचोदनात् प्रवक्ति मायासमयं स्म पूर्णधीः ॥ ४.४७ ॥

अखंडितोपन्यसनं विसंशयं ससंप्रदायं प्रवचो दृढोत्तरम् ।
समागमन् श्रोतुममुष्य साग्रहाः जनाः श्रुताढ्याश्चतुरा बुभूषवः ॥ ४.४८ ॥

गुरोरुपांते श्रवणे रतैर्द्विजैः स पंचषैर्भागवते कदाचन ।
बहुप्रकारे लिखितेऽपि वाचिते प्रकारमेकं प्रभुरभ्यधाद् दृढम् ॥ ४.४९ ॥

परप्रकारेष्वपि संभवत्सु ते विनिर्णयोऽस्मिन् कथमित्युदीरिते ।
मुकुंद बोधेन महाहृदब्रवीत् प्रकारमेनं भगवत्कृतं स्फुटम् ॥ ४.५० ॥

निगद्यतां गद्यमिहैव पंचमे जगद्गुरोर्वेत्थ कृतिस्थितिं यदि ।
इति ब्रुवाणे यतिसत्तमे स्वयं तदुक्तमार्गेण जगाद भूरिहृत् ॥ ४.५१ ॥

अशेष शिष्यैश्च तदाज्ञया तदा परीक्षणायैक्षि समस्तपुस्तकम् ।
स तत्र हंतैकतमे स्थितं त्यजन् न तावदध्याय निकायमभ्यधात् ॥ ४.५२ ॥

अत्र जन्मनि न यत् पठितं ते जैत्र भाति कथमित्यमुनोक्ते ।
पूर्वजन्मसु हि वेद पुरेदं सर्वमित्यमितबुद्धिरुवाच ॥ ४.५३ ॥

इति बहुविधविश्वाश्चर्यचित्तप्रवृत्तेः
जगति विततिमायन्नूतनाऽप्यस्य कीर्तिः ।
क्षपितततततमस्का भास्करीव प्रभाऽलं
सुजनकुमुदवृंदानंददा चंद्रिकेव ॥ ४.५४ ॥

**॥ इति श्रीमत्कविकुलतिलक त्रिविक्रमपंडिताचार्यसुत नारायणपंडिताचार्यविरचिते श्रीमत्सुमध्वविजये महाकाव्ये आनंदांके चतुर्थः सर्गः ॥**

## ५. पंचमः सर्गः

वेदांतविद्यानिजराज्यपालने संकल्प्यमानो गुरुणा गरीयसि ।
अदभ्रचेता अभिषिच्यते पुरा स वारिभिर्वारिजपूरितैरथ ॥ ५.१ ॥

आनंदरूपस्य परस्य पात्र धीः आनंदसंदायिसुशास्त्रकृत् स यत् ।
आनंदतीर्थेति पदं गुरूदितं बभूव तस्यात्यनुरूप रूपकम् ॥ ५.२ ॥

कदाचिदत्रोपययौ यतिः सखा गोविंदबुद्धेर्बहुशिष्यसंवृतः
अमुष्य शिष्या अनुमानशिक्षिताः तदाऽजिगीषन् गुरुबुद्धिमुद्धताः ॥ ५.३ ॥

भिदा सुसाध्येत्यनुमानमत्र तैः प्रायुज्यताऽशु प्रतिपक्षभीषणम्
अखंडयद् व्यक्तमखंड धीरिदं स पक्षदक्षः फणिनं विराडिव ॥ ५.४ ॥

अथापि मिथ्या विमतं मतत्वतो विवाद निर्मुक्त वदित्यवादि तैः ।
अनेन सत्यं विमतं मतत्वतो यथा घटादीत्यनुमा न्यगद्यत ॥ ५.५ ॥

हेतोरतिव्याप्तिरवादि तैर्यदा सकौतुकैस्तूर्णमसावविस्मयः ।
न शुक्तिरूप्यादि मतं यदन्यथा मतं तदित्यादि वदन् जिगाय तान् ॥ ५.६ ॥

तत्त्वेऽप्यतत्त्वे विमतेऽनुमां वदन् तदप्रतिष्ठां प्रतिपादुकः स्वयम् ।
विजित्य विश्वान् विदूषं सभास्वसौ जगाम नाम्नाऽप्यनु मान तीर्थताम् ॥ ५.७ ॥

समस्तवादींद्रगजप्रभंगदः चरन्नवन्यां प्रतिपक्षकांक्षया ।
वेदद्विषां यः प्रथमः समाययौ स वादिसिंहोऽत्र सबुद्धिसागरः ॥ ५.८ ॥

तस्योरुदुर्गर्ववतो जिगीषया निशातमादत्त मुकुंदधीर्द्रुतम् ।
स्वशिष्यहस्तेन मठांतरेषुधेः सुपक्षदक्षं सुखतीर्थमार्गणम् ॥ ५.९ ॥

जैत्रं प्रजिज्ञासु कुतूहलाकुलं नृणां कुलं प्रत्वरितं निशामयन् ।
अवंदतोपेत्य गुरुं गरिष्ठधीः स रूप्यपीठायतनोत्तमस्थितम् ॥ ५.१० ॥

स वादिसिंहस्य गिरं गरीयसीं अखंडयत् पंडितमंडलांतरे ।
तीक्ष्णेन वाक्येन मितेन वेगिना गदां शरेणेव विशारदो मुहुः ॥ ५.११ ॥

असावसूयन् द्विनवप्रकारतो व्यचीक्ल् पत् कंचिदथार्थमुच्चकैः ।
जगद्विजेतुश्च जये ससंशयः तावज्जनोऽजायत पूर्णचेतसः ॥ ५.१२ ॥

विकल्पकोटीरथ खंडयन् द्रुतं रेजेऽधिकं स्मेरमुखो बृहन्मतिः ।
तमस्ततीर्वा द्युमणिर्विशुद्धया गवा श्रितो विष्णुपदं सदास्पदम् ॥ ५.१३ ॥

अगाधमात्मन्यतिवेलमुद्धतं तिरस्कृताशेषसरस्वतीततिम् ।
कामं महामानसकुंभसंभवो लघूचकारेत्यपि बुद्धिसागरम् ॥ ५.१४ ॥

श्व एव वादोऽस्त्विति वादिनौ खलौ अद्योत्तरं भाति यदीर्यतामिति ।
मध्वे ब्रुवाणेऽमत तौ जितौ जनः स निश्चिकायापि निशापलायनात् ॥ ५.१५ ॥

बुद्ध्यब्धिना वादिवरेण चाऽर्जितां जयश्रियं भूपरिवर्तिना चिरात् ।
अहो मुहूर्तादयमप्रयत्नवान् अवाप्तवानित्यतिविस्मितं जनैः ॥ ५.१६ ॥

व्याख्यान् कदाचिन्मणिमद्विनिर्मितं भाष्यं जनैस्तर्कविशारदैर्वृतः ।
उवाच वाचं परिहासहासवान् सम्मोदतीर्थः सुरमोददायिनीम् ॥ ५.१७ ॥

सत्सूत्रभावे प्रविचारिते पृथग् भाष्याभिसंधौ च विशुद्धबुद्धिभिः ।
निगृह्य गूढाग्रहमुग्रमेतयोः मान्योऽन्वयोऽन्योन्यमहो न दृश्यते ॥ ५.१८ ॥

इति ब्रुवाणे प्रतिपादयत्यलं भाष्येऽत्र दोषान् प्रबलान् मुहुर्मुहुः ।
तस्मिंस्तु विस्मेरधियोऽपि यत्नतो न स्थेयसः पर्यहरन्निमानमी ॥ ५.१९ ॥

नन्वस्य सूत्रस्य परोऽर्थ उच्यतां यद् भाष्यमात्रं भवता निरस्यते ।
भवादृशैर्यः कविभिर्न दूष्यते कथंचनेत्यूचुरिमे वचस्विनः ॥ ५.२० ॥

अक्लिष्टशब्दान्वयमेष संभवत् सूत्रार्थमुच्चैर्वचनं तदाऽऽददे ।
मानीकृताम्नाययुतस्मृति क्षणाद् एष्यत्कथा तांडवसूत्रधारकम् ॥ ५.२१ ॥

बुभुत्सया मत्सरवर्जितान् जनान् समत्सरान् वा विजिगीषयाऽऽगतान् ।
श्रुतप्रवीणानतितार्किकान् मुहुः भंग्याऽनया भंगमुपानिनाय सः ॥ ५.२२ ॥

कदाचिदेनं प्रतिगम्य सौम्यधीः स मध्यगेहार्यवरः प्रसेदिवान् ।
हेतोः कुतश्चिद् विमनीकृतोऽप्यहो गुणाब्धिलुब्धः सुजनः प्रसीदति ॥ ५.२३ ॥

तेजोऽमृतं नंदनगात्रपात्रगं नेत्रांजलिभ्यामपिबत् सदाऽव्ययम् ।
विद्यासुधां चास्य वचोमहाघटे पूर्णामसौ कर्णपुटेन पंडितः ॥ ५.२४ ॥

लीलाविवादे गुरुणा जगद्गुरोः प्रसंगतस्तत्र च तादृशे सति ।
सूत्रार्थविच्चेत् कुरु भाष्यमंजसे त्याक्षेपपूर्वं गुरुरभ्यधादिमम् ॥ ५.२५ ॥

विधानमात्रं तदुपाददे तदा पयो यथाऽच्छं परमः स हंसराट् ।
तल्लीनमाक्षेपमुपैक्षताफलं वारीव संतो हि गुणांशतोषिणः ॥ ५.२६ ॥

वैराग्यवैयात्यसुवाक्त्वपूर्वकैः युतो गुणैः पारमहंस्यभूषणैः ।
ज्येष्ठो यतिर्यो लिकुचान्वयोद्भवः तं भूरिभक्तिः स कदाचिदब्रवीत्  ॥ ५.२७ ॥

विरोधि वेदांतकृतांतसंपदां भाष्यादिकं चेदिदमस्तु का क्षतिः ।
अस्मभ्यमाचक्ष्व विचक्षणोचितं भावं तु सूत्रोपनिषद्विवक्षितम् ॥ ५.२८ ॥

इत्यस्य वाचा शरदेव भासिता यदाऽखिलाशाः शुभपूर्णया बभौ ।
प्रमोदतीर्थाननचंद्रचंद्रिका व्याख्याभिधा विष्णुपदप्रकाशिनी ॥ ५.२९ ॥

जेष्यन् कदाचित् किल कालपालितां दिशं प्रयातोऽच्युतबुद्धिना सह ।
समग्रधीर्मंडितविष्णुमंगलं विष्णुं जगन्मंगलमाननाम सः ॥ ५.३० ॥

भिक्षाप्रदात्राऽत्र परीक्षितुं मुहुः दत्ते प्रभुक्ते कदळीफलोच्चये ।
अनेन निर्यत्नमवार्यविस्मयः तमार्यवर्यं विजनेऽवदद् गुरुः ॥ ५.३१ ॥

भिक्षावसाने द्विशताधिकैः फलैः व्यूढैः प्रभुक्तैः परिपूरितेऽपि ते ।
तनूदरे नास्ति गरिष्ठता कथं सुचित्त सत्यं वदताद् भवानिति ॥ ५.३२ ॥

अंगुष्ठमात्रं जठरप्रतिष्ठितं जाज्वल्यमानं मम जातवेदसम् ।
नित्यं हितं विश्वदहं च वित्त तं विश्वेशचेता इति सोऽब्रवीत् तदा ॥ ५.३३ ॥

पर्याकुलानेकसरस्वतीततीन् न्यायोपपन्नान् विविधार्थसंयुतान् ।
अतीत्य देशान् समयांश्च चारुधीः असौ जगामाभिमतेन वर्त्मना ॥ ५.३४ ॥

स्वहेळया पातितपार्थिवव्रजां धीशुद्धिदां केरळभूषणायिताम् ।
पयस्विनीं प्रेक्ष्य पथि द्विजार्चितां स भाविनीमस्मरदत्र चंडिकाम् ॥ ५.३५ ॥

ततः क्रमेण प्रचलन्नुपेयिवान् अवंदतेंदीवरसुंदरच्छविम् ।
अंभोजनाभं स भुजंगशायिनं श्रीवल्लभं श्रीमदनंतसत्पुरे ॥ ५.३६ ॥

वेदांतसूत्राणि कृतांतवित्तमो व्याख्यादसौ शिष्यगणाय संसदि ।
विलक्षणं जीवगणाद् गुणार्णवं ब्रह्माच्युताख्यं प्रतिपादयन् मुहुः ॥ ५.३७ ॥

अप्रांशुनूलोपपदाधिवासजः स संकरो वैरपरायणः पुनः ।
असूययोचेऽत्र महानतिक्रमः सूत्रार्थ वादोऽकृतभाष्यकेश्चिति ॥ ५.३८ ॥

वदोत्तरं भाति यदीह कुर्महे भाष्यं कृतिर्नास्य हि दंडवारिता ।
जगद्गुरूणामिति तां गुरोर्गिरं जनः समस्तोऽभिननंद सस्मिताम् ॥ ५.३९ ॥

प्राज्ञैर्महापूरुषसर्वलक्षणैः संपन्नदेहोऽयमितीरिते प्रभौ ।
परे परस्याप्यतिपीनतादृशः स्फिङ्मात्रसंशंसनमेव चक्रिरे ॥ ५.४० ॥

स्फिग्दूषणानि प्रतिपादयत्यलं संपूर्णसंख्येऽस्य तु लक्ष्मशास्त्रतः ।
तद्दंडसंखंडनसंश्रवं व्यधात् तदक्षमोऽसौ प्रकृतिर्हि साऽसताम् ॥ ५.४१ ॥

स्नात्वाऽत्र तीर्थेष्वचिरेण कन्यकातीर्थे सुतीर्थे सुखतीर्थ आप्लुतः ।
समुद्रसेतौ च निमज्य विष्णवे श्रीरामनाथाय नमाश्चकार सः ॥ ५.४२ ॥

तमाव्रजंतं यतिवेषधारिणं दंडं प्रकाश्यैष हसन्नभाषत ।
खंड्येत दंडो यदि चंड न त्वया त्वं पंडकोऽपंडित वंध्यवागिति ॥ ५.४३ ॥

लज्जानतः स्वार्थमथार्थयन्नसन् उपैक्ष्यतासौ द्विजनायकैस्तदा ।
आनंदयंतं वदनेंदुना जगत् तं द्वेष्टि कः प्राज्ञमिहेति वादिभिः ॥ ५.४४ ॥

यायाः प्रसक्ताः परिषत्सु पूरुषैः विद्या विदग्धैर्विविधैः समागमे ।
स तासुतासु प्रतिभातिभासुरो विद्यासु विद्याधिपतिर्जिगाय तान् ॥ ५.४५ ॥

अचाल्यमानः सगुरुः स चापलैः असज्जनानामबलीयसामिह ।
उवास मासांश्चतुरो महामनाः सिंहो गुहांतोपगतः शुनामिव ॥ ५.४६ ॥

शृंगारसिंधुं स भुजंगशायिनं श्रीरंगवासं कृतमंगलं सताम् ।
अमंदधीर्देवमवंदताऽगतः कवेरकन्याहिमवायुसेवितम् ॥ ५.४७ ॥

ततो निवृत्तः परमेव पूरुषं प्रणम्य नानायतनेषु संचरन् ।
प्रकाशयन् स्वातिशयानमानुषान् आशामुदीचीं प्रययावसौ क्रमात् ॥ ५.४८ ॥

ततस्ततो विस्मितलोचनैर्नरैः निरीक्ष्यमाणोऽतिसुलक्षणाकृतिः ।
ग्रामोत्तमान् प्राप्य पयस्विनीतटे विवेश देवायतनं स किंचन ॥ ५.४९ ॥

अधीत्य धर्मेण षडंगमागमं तदर्थसंवर्णननिर्णयान्विताः ।
प्रापुर्द्विजेंद्रास्तमपूर्वपूरुषं जिज्ञासवः सुप्रथितं जगत्त्रये ॥ ५.५० ॥

सुस्मितेन्दुमरविन्दलोचनं स्वर्णवर्णमतिभद्रभाशणम् ।
वीतभूशमपि विश्वभूशणंतं दिड्क्शुरलमापतज्जनः ॥ ५.५१ ॥

विद्योरुद्युतिधीरतारकतिरस्कारे पतंगायितो
दुर्वादीभकुतर्ककुंभदलने सिंहप्रबर्हायितः ।
लोलालोककलोकदृक्कुमुदिनी संह्लादनेऽब्जायितः
संसन्मंडलमंडनायित उत स्वानंदतीर्थो बभौ ॥ ५.५२ ॥

**॥ इति श्रीमत्कविकुलतिलक त्रिविक्रमपंडिताचार्यसुत**
**नारायणपंडिताचार्यविरचिते श्रीमत्सुमध्वविजये**
**महाकाव्ये आनंदांके पंचमः सर्गः ॥**

## ६. षष्ठः सर्गः

ऐतरेयमथ किंचन सूक्तं सूचयन् सदसि तत्र गरिष्ठः ।
श्रोतुमिच्छति सभा भगवद्भ्यः सूक्तभावमिति तावदुवाच ॥ ६.१ ॥

वर्णसौष्ठवगरिष्ठमतूर्णं तुल्यमात्रमतिमात्रसुलक्ष्म ।
व्यूड हृज्जलद घोषममुष्यो च्चारणं विदधदभ्यधितार्थम् ॥ ६.२ ॥

लक्षणान्विततया वचनेऽस्मिन् देवतागुरुमसावतिशेते ।
मानमित्यपि विधाय धिया ते तत्त् तु सूक्तमपरार्थमवोचन् ॥ ६.३ ॥

स्यात् तथेत्थमपि संभविताऽर्थः त्र्यर्थतां श्रुतिषु वित्त दशार्थम् ।
भारतं ननु शतार्थमपि स्याद् वैष्णवं पदसहस्रतयं हि ॥ ६.४ ॥

इत्युदीरयति विस्तृतचित्ते भूसुरा इह जिगीषव एनम् ।
ऊचुरर्थशतकं हरिनाम्नां वर्ण्यतामिति सहासमुखास्ते ॥ ६.५ ॥

वर्णयामि तदहं सकलं वः सौष्ठवादनु वदंतु भवंतः ।
तं वदंतमिति तेऽथ वदंतो बाढमित्यतिदृढोद्यममापुः ॥ ६.६ ॥

प्रत्ययप्रकृतिसंगमभंगीं शब्दशास्त्रविहतांप्रतिदर्श्य ।
शुद्धधीः श्रुतिशिरः शतसिद्धान् अभ्यधात् सपदि विश्वपदार्थन् ॥ ६.७ ॥

यावदर्थशतकं न विशंकः संततोक्तिकृदपूपुरदेषः ।
वर्णितावधृति दुर्बल चित्ताः तावदाकुलहृदो ह्यभवंस्ते ॥ ६.८ ॥

सांगवेदचतुरा इतिहासे शिक्षिताः सुबहवोऽप्यतिधृष्टाः ।
नैतदीरितमहो जगृहुस्ते विश्वसंक्षयपयोऽंधुगणा वा ॥ ६.९ ॥

देवतास्वसुलभ प्रतिभा ते मानुषेषु चपलेषु कथा का ।
क्षाम्य सौम्य सकलज्ञ नमस्ते ते ब्रुवंत इति तं किल नेमुः ॥ ६.१० ॥

वेदशास्त्रचतुरैरिह विद्यावित्तलिप्सुभिरवाप्तमशेषैः ।
प्राप केरळसुमंडलजातैः अन्यदायतनमायतचेताः ॥ ६.११ ॥

तर्कतंत्रकुशलानपि पुंसः चर्करीति बत सोऽयममानान् ।
मानमानमयतीह कथं नो नैष मंडलभुवां समितानाम् ॥ ६.१२ ॥

मंत्रयंत इति ते द्विजवर्याः अन्यदेशजमुखस्तमपृच्च्वन् ।
सद्दाददसुशंसननिंदाकारिसूक्तगतमर्थमुपेत्य ॥ ६.१३ ॥

तं स्फुटं प्रकथयन् स पृणीयाच्व्बद्मूलमवदत् पृण धतुम् ।
तं जिगीषुमथ विप्रमदः प्रीधातुमेष निगदंतमुवाच ॥ ६.१४ ॥

प्रादिभेदमविदन् गुणय त्वं मूढ पांसुषु लिखन् लिपिसंघम् ।
भत्सयन्निति जहास सुहासो मत्सराकुलधियो जडयन् सः ॥ ६.१५ ॥

तत् प्रसंगबलतोऽखिलविद्यापाटवं पृथः हृदः प्रतिबुद्ध्य ।
आनमन् सबहुमानममी तं यं नमंति किल नाकिनिकायाः ॥ ६.१६ ॥

कन्यकादृतसुरेंद्रवपुः श्रीदानवाचिवरसूक्तहृदुक्तौ ।
कुत्रचित् सदसि तावदपाला कीर्तिताऽतितरुणीत्ययमूचे ॥ ६.१७ ॥

श्वित्रिणी भवति तत्पदवाच्येत्याग्रहेण वदतोऽविदुषोऽत्र ।
कश्चिदेष्यति विपश्चिदिहैनं पृच्छतेत्ययमगच्छदथोक्त्वा ॥ ६.१८ ॥

देशमेनमचिरादुपयातः तादृशाकृतिरहो कृतबुद्धिः ।
तांस्तथाऽभ्यधित तत्पदभावं सूरिमौलिमणिनाऽत्र यथोचे ॥ ६.१९ ॥

केवलं न सकलाः श्रुतिविद्याः मानपूर्वकसमस्तगिरोऽस्य ।
अप्यनागतगतप्रतिपत्तिं श्रद् दधुः पृथलचेतस एते ॥ ६.२० ॥

यद्यदेव सपदि प्रकृतं स्यात् तत्तदेष यदवेदखलं च ।
सर्वदा सदसि सर्वबुधानां सर्वविद्यतिरिति प्रथितोऽभूत् ॥ ६.२१ ॥

अप्रयातमपि देशमशेषं व्यानशे सुजनकैरवबंधुः ।
पूर्णदृक् प्रततया निजकीर्त्या पूर्णचंद्र इव चंद्रिकयाऽलम् ॥ ६.२२ ॥

सुंदरेषु सुरमंदिरवृंदेष्विंदिरारमणवंदनकृत्यम् ।
आचरन्नसुचिरात् सुविचारो रूप्यपीठपतिमाप मुकुंदम् ॥ ६.२३ ॥

भूसुरप्रवरबुद्धिसमृद्धिव्यक्तयुक्तवपुषं रुचिरांगीम् ।
सूत्रदीप्तमणिमालिकयाऽलं भूषितां भवनभूषणभताम् ॥ ६.२४ ॥

पादसुंदरपदक्रमभावैः भासितांप्रकटवर्णगुणाढ्याम् ।
भारतोत्तमभृतामनुरूपाच्छादनां समधिकस्वर शोभम् ॥ ६.२५ ॥

राजसूयमुखसन्मखवृत्तां वासुदेवगुणनिष्ठितभावाम् ।
सर्वधर्मपरिशिक्षणदक्षां वंदितां जनतया जननीवत् ॥ ६.२६ ॥

मौलिसंग्रहविकर्षणदूनां मायिना सदसि दुष्टजनेन ।
न्यायमार्गमपहाय महांतं स्वेश्वरत्वमपि साधयताऽलम् ॥ ६.२७ ॥

सज्जनैः कतिपयैरतिदीनैः चालितैः कलिबलाच्छभमार्गात् ।
अप्युपेक्षितविकर्षणदुःखां सातिशोकमपि कैश्चन दृष्टाम् ॥ ६.२८ ॥

वासुदेव धरणीधर नाथेत्युच्चकैरपि मुहुः प्रवदंतीम् ।
पूर्णसद्गुणमजं गतदोषं बिभ्रतीं हृदि विविक्तमशेषात् ॥ ६.२९ ॥

वार्यतां बुधजनैर्ननु हाहा नैष धर्म इति चाभिदधनाम् ।
कृष्णलाळितमामनवद्यां अप्यनन्यशरणां शरणोत्काम् ॥ ६.३० ॥

वेदिजामिव पुरा भरताग्र्यः स स्वयं श्रुतिततिं खलु दृष्ट्वा ।
पुष्टबुद्धिरकरोत् करुणाब्धिः दुष्टपक्षदमनस्थिरसंधाम् ॥ ६.३१ ॥

अव्ययं सततमप्युपभक्त्या वित्तमग्र्यमिव दूरयियासुः ।
ज्यायसे सगुरवे हरिगीताभाष्यमेष विरचय्य तदाऽदात् ॥ ६.३२ ॥

हेतुवादिनि विशंकटबुद्धौ तीर्थमर्थयति गंतुमनुज्ञाम् ।
तां दिदेश पुरुषोत्तमतीर्थः चिंतयन् स पुरुषोत्तम रक्षाम् ॥ ६.३३ ॥

नीरजा मलयमंडलवृत्त्या श्लाघितो भुवि सदाळ्यनुयातः ।
साधुपांथपरितापमपास्यनुत्तरां दिशमयान्मरुदंशः ॥ ६.३४ ॥

बुद्धिशुद्धिकरगोनिकराढ्यं तीर्थजातमुभयं च धरण्याम् ।
आत्ममज्जनत एव निकामं पर्यशोधयदमंदमनीषः ॥ ६.३५ ॥

वासुदेवपदसंततसंगी तेजसाऽप्यलमधः कृतशर्वः ।
अत्यवर्तत नितांतमथासौ गांगमोघमघनाशनकीर्तिः ॥ ६.३६ ॥

तत्र तत्र स जगत्त्रयचित्रं कर्म शर्मदमनुस्मृतिमात्रात् ।
संचरन् विदधदाप नराणां गोचरं बदरिकाश्रमपार्श्वम् ॥ ६.३७ ॥

मंडयन् भरतखंडमखंडं नादिरायणपदोऽत्र परो यः ।
तं नमन् प्रचुरधीर्हरिगीताभाष्यमार्पयदुपायनमस्मै ॥ ६.३८ ॥

प्रीतयेऽस्य पुरतो वरभाष्यं वाचयन् स जनतामपसार्य ।
वच्मि शक्तित उरुक्रमगीताभष्यामित्यकथयत् पुरुसंख्यः ॥ ६.३९ ॥

एतदर्थमतिसूक्ष्ममपि त्वं शक्त एव न यदात्थ समस्तम् ।
तेन लेशत इतीह पदं स्याद् इत्यगद्यत जगज्जनकेन ॥ ६.४० ॥

तेन तत्प्रवचने विहतेऽलं शुश्रुवुः प्राशयिता अपि शिष्याः ।
उच्यतामिति मुहुः सपृथिव्यास्फालनं पदमहो हरिणोक्तम् ॥ ६.४१ ॥

शब्दभेदमवधर्य तमर्चासन्निषण्णवपुषः परमस्य ।
तस्य भावविदमंदमनीषः प्रोत्थितः प्रवचनं व्यधितैभ्यः ॥ ६.४२ ॥

मज्जनं व्यधित शीतळगंगावारि नित्यमरुणोदयकाले ।
यत् स्पृशंति न नरा हिमभीता अंश एष पृषतामधिपस्य ॥ ६.४३ ॥

काष्ठमौनमदधादुपवासं शुद्धमप्यकृत शुद्ध हृदिच्छन् ।
नित्यतुष्टहरितोषविशेषं चिंतयन् प्रभुमनंतमठांतः ॥ ॥ ६.४४ ॥

प्रैरयत् स्वचरणे रतचित्तं मध्वमत्र दिनमंडलमेनम् ।
स्वाश्रमोपगमनाय मुकुंदो दीप्तिदृष्टिविदितागतिरन्यैः ॥ ६.४५ ॥

नक्तमेव भगवत्युपयाते प्रोदिते सति सहस्रमरीचौ ।
मौनवानलिखदुत्तमचित्तः शिष्यशिक्षणपरः करुणावान् ॥ ६.४६ ॥

नेदृशं स्थळमलं शमलघ्नं नास्य तीर्थसलिलस्य समं वाः ।
नास्मदुक्तिसदृशं हितरूपं नास्ति विष्णुसदृशं ननु दैवम् ॥ ६.४७ ॥

याति तावदधुनैव जनोऽयं व्यासरूपमजितं प्रदिदृक्षुः ।
आव्रजेदिह न वा स हि वेद स्वस्ति वोऽस्त्विति ययावथ मध्वः ॥ ६.४८ ॥

नाथ नाथ बत नोऽत्र विनाथान् मा त्यजोरुकरुणो भगवंस्त्वम् ।
नोदितं स्मृतमपीति हि शिष्यैः स्वामिनोऽभिमतभंगभयेन ॥ ६.४९ ॥

सद्गुरोर्न विरहं सहमानः सत्यतीर्थयतिरन्वगमत् तम् ।
यस्त्रिवारमितरासुतशाखास्वर्थमग्र्यमाशृणोत् पुरुसंख्यात् ॥ ६.५० ॥

दुर्गमार्गगतमप्यनुधवन् नाऽप सोऽयमरुणीभवतीने ।
लीलया सजवमाक्रममाणं व्याश्रयांतरसुदूरशिलासु ॥ ६.५१ ॥

आनिवृत्तवपुषा गुरुणाऽऽरात् पाणिना ह्यभिनयेन सुनुन्नः ।
त्रस्तधीरतिययौ स मुहूर्तात् तद्दिनोपगतमार्गमशेषम् ॥ ६.५२ ॥

आश्रमे निजजनानिह दृष्ट्वा तं प्रसादमहिमानममुष्य ।
प्रोच्य तत्प्लवनमप्यतिचित्रं तस्य तैः सह सदाऽस्मरदेषः ॥ ६.५३ ॥

वानरेंद्र इव वायुजवोऽसौ भीमसेन इव दानवभीमः ।
उल्ललास गिरिपुंगवशृंगे स व्रजन् वजिननाशननामा ॥ ६.५४ ॥

बहुसत्त्वगणं सविकं समहाविषमोक्षमहाहिमवंतमयम् ।
विषमोक्षमहाहिमवंतमयन् नगमैक्षत फुल्लदृगस्तभयः ॥ ६.५५ ॥

सुहसितकमलाकरोपगूढं सुजनसुखार्थमनंतभोगशय्यम् ।
विकसितसुमनोघटागमुच्चं मरतकरत्नमयस्थलाग्र्यशोभम् ॥ ६.५६ ॥

पादोपांतनमन्महामुनिगणं हेमप्रदीप्तांबरं
श्रीमद्रत्नकलापमग्र्यकटकैर्विभ्राजितं हाटकैः ।
दृष्ट्वातं धरणीधरं सुवनमालोल्लासिनं सुंदरं
स्वानंदाकृतिमस्मरन्मुररिपुं स्वानंदतीर्थस्तदा ॥ ६.५७ ॥

**॥ इति श्रीमत्कविकुलतिलक त्रिविक्रमपंडिताचार्यसुत**
**नारायणपंडिताचार्यविरचिते श्रीमत्सुमध्वविजये**
**महाकाव्ये आनंदांके षष्ठः सर्गः ॥**

## ७. सप्तमः सर्गः

अथ हैमवते तटांतरे बदरीषंडविशेषमंडितम् ।
परमाश्रममाश्रयं श्रियः सकलज्ञः स ददर्श विश्रुतम् ॥ १ ॥

हिमवर्षरविप्रभासहाः पृथुसत्रप्रथिता द्विजाश्रयाः ।
अपि विष्णुपदस्पृशोऽलसनुभये यत्र विचित्रशाखिनः ॥ २ ॥

श्रवणामृतगीर्गणैर्द्विजैः शुकमुख्यैः शुभपक्षिभिर्वृतम् ।
कमलेष्टतमस्थिरांतरैःअपि हंसैः परमैरमेचकैः ॥ ३ ॥

सुमनोनिकरेण पूरितं स्वमनोऽभीष्टदमल्पदुर्गमम् ।
अपरस्परमत्सरप्रजं ननु वैकुंठमिवाच्युतालयम् ॥ ४ ॥

तमिमं प्रविशंतमाश्रमं द्व्यधिकत्रिंशदुदारलक्षणम् ।
गुणसारविदः कुतूहलाद् अवलोक्यर्षय इत्यचिंतयन् ॥ ५ ॥

कनकातुलतालसन्निभः कमलाक्षो विमलेंदुसन्मुखः ।
गजराजगतिर्महाभुजः प्रतियान् कोऽयमपूर्वपूरुषः ॥ ६ ॥

अतिशांतवपुर्निशाकरः स्वयमेकांतखरो दिवाकरः ।
इति नास्य गुणार्णवाकृतेःउपमानं भुवनेषु लभ्यते ॥ ७ ॥

परमाश्रमिणां गतश्रमो ननु चिह्नानि बिभर्ति धीरधीः ।
अपि मानुषभावविग्रहो विपुलं विस्मयमातनोति नः ॥ ८ ॥

चतुरश्चतुराननः स्वयं पवनो वा व्रतिरूप आव्रजन् ।
शृतिनाथदिदृक्षयाऽन्यथा न खलु स्यान्निखिलाग्र्यलक्ष्मवान् ॥ ९ ॥

अवलोकितलक्षणः स तैः इति संचिंत्य कुतूहलाकुलैः ।
अविळंबगतिर्न्यशामयत् तरुमारात् सुरपादपोत्तमम् ॥ १० ॥

मसृणत्वचमुन्नतं ततं बहुशाखाफणसूनरत्नकम् ।
भगवंतमनंतमंतिके स्थितमीशस्य निषेवणाय वा ॥ ७.११ ॥

अतिचित्रविचित्रपत्रिणं बहुवर्णं हरिगोनिवारकम् ।
मुनिनंदनमिंदिरापतेः अधिकेष्टं पततामिवाधिपम् ॥ ७.१२ ॥

अमृतात्ममहाफलप्रदं दुरवापं हरिभक्तिवर्जितैः ।
श्रितसाधुपुराणभारतं निगमं मूर्तमिवोरुशाखिनम् ॥ ७.१३ ॥

अथ तस्य स वेदिकांतरे सुविशाले विमले मनोहरे ।
अवलोकितवाननंतधीःदिवि देवानिव तापसोत्तमान् ॥ ७.१४ ॥

अपि सप्ततया विराजितान् गतसंख्यान् गुणिनो गुणोज्झितान् ।
अपि मन्युमदादिवर्जितान् गतभोगान् पवनाशनान् सदा ॥ ७.१५ ॥

मुनिमंडलमध्यवर्तिनं त्रिजगन्मंडलमंडनायितम् ।
इह सत्यवतीसुतं हरिं परिपूर्णप्रमतिः समैक्षत ॥ ७.१६ ॥

निजहृत्कमलेऽतिनिर्मले सततं साधु निशामयन्नपि ।
अवलोक्य पुनःपुनर्नवं तमसौ विस्मित इत्यचिंतयत् ॥ ७.१७ ॥

अगणय्यगुणार्णवोऽमलः स हि नारायण एष केवलम् ।
विधिनाऽनुसृतं पराशरात् सुषुवे सत्यवती किलात्र यम् ॥ ७.१८ ॥

धवळेऽस्य मनःपयोनिधौ सदनुक्रोशगिरींद्रलोळिते ।
प्रकटीभवति स्म सुंदरी दयिता दैत्यरिपोस्त्रयीमयी ॥ ७.१९ ॥

इत एव पुराणगौरगौ समहाभारतपारिजातके ।
सति जातवति व्यजायत प्रवरं सूत्रगणामृतं स्वयम् ॥ ७.२० ॥

निरवग्रहमुर्वनुग्रहं विदधत् पांडुसुतादिसज्जने ।
अवनाववनाय संविदां सुचिरायैष चचार चारुगीः ॥ ७.२१ ॥

अधुना कलिकालवृत्तये सवितेव क्षणदानुवृत्तये ।
जनदृग्विषयत्वमत्यजद्भगवानाश्रममावसन्निमम् ॥ ७.२२ ॥

तदिदं वपुरस्य दृश्यते दलितेंदीवरसुंदरद्युति ।
परमाजिनयोगपीठगं मम चेतोनयनाभिनंदनम् ॥ ७.२३ ॥

अगणय्यगुणैः सुपूरितं परिपूर्णागणितात्मसद्गुणैः ।
इदमस्तसमस्तदूषणं सचिदानंदमयं हि केवलम् ॥ ७.२४ ॥

कमलाकमलासनानिलैः विहगाहींद्रशिवेंद्रपूर्वकैः ।
पदपद्मरजोऽस्य धारितं शिरसा हंत वहाम्यहं मुहुः ॥ ७.२५ ॥

प्रणमामि पदद्वयं विभोः ध्वजवज्रांकुशपद्मचिह्नवत् ।
निजमानसरागपीडनादरुणीभूतमिवारुणं स्वयम् ॥ ७.२६ ॥

ननु केवलमेव वैष्णवं श्रितवंतः पदमात्मरोचिषा ।
तमसोऽप्युभयस्य नाशका विजयंते नखरा नवं रविम् ॥ ७.२७ ॥

सुकुमारतळांगुलीमतोः पदयोरस्य निगूढगुल्फयोः ।
उपमानमहो न लब्यते कविवर्यैरितरेतरं विना ॥ ७.२८ ॥

उचितां गुरुतां दधत् क्रमात् शुचि तेजस्वि सुवृत्तमुत्तमम् ।
भजतोऽत्र च भाजयत्यदो विभुजंघायुगळं सरूपताम् ॥ ७.२९ ॥

अचलासनयोगपट्टिका वरकक्ष्या सकृदाप्तमिष्टदम् ।
परितोऽपि हरिं स्फुरंत्यहो अनिशं धन्यतमेति मे मतिः ॥ ७.३० ॥

रुचिरेण वरैणचर्मणा रुचिराजद्युतिचारुरोचिषा ।
परमोरुनितंबसंगिना परमाश्चर्यतया विराज्यते ॥ ७.३१ ॥

तनुनिम्नसुनाभिशोभिते वलिभे वारिजनाभ आदधे ।
प्रतनावतिसुंदरे मृदौ उदरेऽस्मिन् जगदंडमंडलम् ॥ ७.३२ ॥

हृदये कृतसज्जनोदये सुविशाले विमले मनोहरे ।
उभयं वहति त्रयीमयं भगवान् ब्रह्मसुसूत्रमुत्तमम् ॥ ७.३३ ॥

असमेऽनधिके सुसाधिते निजताते रविराशिदीधिति ।
प्रददौ त्रिजगज्जयध्वजं विधिरेतद्गळसंगि भूषणम् ॥ ७.३४ ॥

अरिवारिजलक्षणोल्लसत्सुकुमारारुण पाणिपद्मयोः ।
पृथुपीवरवृत्तहस्तयोःउपमां नैव लभामहेऽनयोः ॥ ७.३५ ॥

भजतां वरतर्कमुद्रया द्यति हस्ताग्रमबोधमीशितुः ।
अधिजानु समर्पितं परं कृतभूयोभयभंगमंगलम् ॥ ७.३६ ॥

सततं गळता स्वतः श्रुतित्रितयेनेव निकाममंकितः ।
सुविडंबितकंबुरीक्ष्यते वररेखात्रयवान् गुरोर्गळः ॥ ७.३७ ॥

सकलास्तकलंककाळिमस्फुरदिंदुप्रकरोरुविभ्रमम्।
अधरीकुरुते स्वशोभया वदनं देवशिखामणेरिदम् ॥ ७.३८ ॥

अरुणाश्मदलांतरोल्लसन्नवमुक्तावलिमस्य लज्जयेत् ।
हसतः सितदंतसंततिः परमश्रीररुणोष्ठरोचिषः ॥ ७.३९ ॥

द्विजवृंदकृतं कुतूहलाद् अनुयोगांधुसहस्रमुत्तमम् ।
इयमेकपदे सरस्वती श्रुतिभर्तुः परिपूरयत्यहो ॥ ७.४० ॥

जलजायतलोचनस्य मां अवलोकोऽयमुपेत्य लाळयन् ।
कुरुते परिरभ्य पूरितं भुवनानंदकरस्मितान्वितः ॥ ७.४१ ॥

उपकर्णममुष्य भासिता तुळसी मंत्रयतीव लाळिता ।
मम नाथ पदं न मत्सरात् जलजाद्यानि हरेयुरित्यलम् ॥ ७.४२ ॥

विभवाभिभवोद्भवादिकं भुवनानां भुवनप्रभोर्भ्रुवोः ।
अनयोरपि दभ्रविभ्रमात् सभवांभोजभवात्मनां भवेत् ॥ ७.४३ ॥

त्रिजगत्तिलकाळिकांतरे तिलकोऽयं परभागमाप्तवान् ।
हरिनीलगिरींद्रमस्तकस्फुटशोणोपलपंक्तिसन्निभः ॥ ७.४४ ॥

नवमंबुधरं विडंबयद्वरविद्युद्वलयं जगद्गुरोः ।
अवलोक्य कृतार्थतामगां सजटामंडलमंडनं वपुः ॥ ७.४५ ॥

न रमाऽपि पदांगुलीलसन्नखधूराजदनंतसद्गुणान् ।
गणयेद् गणयंत्यनारतं परमान् कोऽस्य परो गुणान् वदेत् ॥ ७.४६ ॥

न कुतूहलिता कुतूहलं तनुमेनामवलोक्य सद्गुरोः ।
सनवावरणांडदर्शिनो गृहबुद्ध्या मम निष्कुतूहलम् ॥ ७.४७ ॥

इति चिंतयता महाधिया पदवीं बाह्यगतामतीयुषा ।
स मनोनयनैः पुरागतः तत आपे वपुषाऽपि वेदराट् ॥ ७.४८ ॥

गुरुभक्तिभरानताकृतिः विरचय्यांजलिबंधमंजसा ।
क्षणमामुकुळीकृतेक्षणः स गुरुं केवलमभ्यवंदत ॥ ७.४९ ॥

विनयाभरणेन भूषितः स्फुटमष्टांगविशिष्टचेष्टितः ।
भगवत्तमपादपंकजे भगवान् स प्रणनाम भाग्यवान् ॥ ७.५० ॥

स निरीक्ष्य पराशरात्मजः प्रणतं प्रेष्ठमशेषसद्गुणैः ।
करयोर्युगळेन वल्गुना तमुदस्थापयदाशुपातिना ॥ ७.५१ ॥

अमितप्रमतिं श्रुतीश्वरः परिरेभे परिगृह्य तं दृतम् ।
प्रणयामृतपूर्णमानसः स्मितवक्त्रः परिफुल्ललोचनः ॥ ७.५२ ॥

यमजाम्युदवास ऊर्जितो यदि जांबूनदवारि संव्रजेत् ।
कनकद्युतिमध्वसंगवानुपमीयेत स तेन नीलभाः ॥ ७.५३ ॥

यदि राजविभूषणैर्युतौ द्विजवर्यान्वयजाविमौ हरी ।
नृपगोत्रभुवोः पुराऽत्मनोः स्फुटतुल्यावुपगूढयोर्मिथः ॥ ७.५४ ॥

इदमाप शुकोऽपि लाळनं न समग्रं जगतां पितुः पितुः ।
अलभिष्ट यदेष धन्य इत्यतिकौतूहलमापि तापसैः ॥ ७.५५ ॥

अमुष्य शिष्या विनयेन तस्मै गुरोरभिप्रायविदो विदग्धाः ।
तदाऽनुरूपं ददुरासनं ते चतुर्मुखायेव मुकुंददासाः ॥ ७.५६ ॥

आस्यतामित्युदीर्योपविष्टे सत्यवत्याः सुते सत्यवाचि ।
नंदयन् मंदहासावलोकैः तान् मुनींद्रानिहोपाविशत् सः ॥ ७.५७ ॥

अवगम्य तं मुनिगणा वरिष्ठतो
विधिवद्व्यधुर्विधिविदोऽस्य माननाम् ।
अपि संकथाः श्रुतिसुखाः कवींद्रयो
रनयोर्निशम्य परमां मुदं ययुः ॥ ७.५८ ॥

सज्ज्ञानायाऽनंदविज्ञानमूर्ती प्राप्तौ पृथ्वीमाश्रमे तत्र तावत् ।
जाज्वल्येते विष्णुवायू स्म देवौ वेदव्यासानंदतीर्थाभिधानौ ॥ ७.५९ ॥

**॥ इति श्रीमत्कविकुलतिलक त्रिविक्रमपंडिताचार्यसुत**
**नारायणपंडिताचार्यविरचिते श्रीमत्सुमध्वविजये**
**महाकाव्ये आनंदांके सप्तमः सर्गः ॥**

## ८. अष्टमः सर्गः

प्रतिभाप्रभाप्रमुखसद्गुणैर्निजैः अतिविस्मयं नियमिनां मनो नयन् ।
पुरुधीः कदाचिदथ वेदनायकं विजने शनैरुपससाद तं वने ॥ ८.१ ॥

सुविशेषशेषवदशेषवर्णितप्रतिबोद्धुरस्य ननु शिष्यतोचिता ।
गुरुमानसस्य गुरुताऽपि सत्पतेः इति सोपसत्तिरमरैरमान्यत ॥ ८.२ ॥

पुर एव पूरितमपूरयत् पुनः ननु कृष्ण एष परमार्थसंख्यया ।
भगवन्मनः पुरमिवाऽयतं पुरा निजधाम तां च जगृहे तदद्भुतम् ॥ ८.३ ॥

इतिहाससुंदरपुराणसूत्रसत्प्रियपंचरात्रनिजभावसंयुतम् ।
अशृणोदनंतहृदनंततोऽचिरात् परमार्थमप्यगणितागमावलेः ॥ ८.४ ॥

ऋजुपुंगवस्य परिजानतः स्वयं सकलं तदप्यलमनंतजन्मसु ।
स्वकृतोर्वनुग्रहबलादमुष्य तां विशिशेष शेषशयनः पुनर्धियम् ॥ ८.५ ॥

अथ बादरायणसहायसंपदा प्रययौ प्रणंतुममितांतरो युतः ।
अपि नादिरायणपदोदितं हरेः वपुरंतरं लसितमाश्रमांतरे ॥ ८.६ ॥

तमपश्यदाश्रमवरे प्रभूतधीः ज्वलनं ज्वलंतमिव धूमवर्जितम् ।
वरवल्कलाकलितमौंजिमेखलं विलसज्जटावलयमादिपूरुषम् ॥ ८.७ ॥

अतिदुर्जयेंद्रियजयादिरूपिणा तपसा वसंतमिव संततं वने ।
निजरूपभूतनिरपेक्षनिर्मलप्रचुरात्मसौख्यरतमप्यनारतम् ॥ ८.८ ॥

नयनद्वयेन नलिनप्रभामुषा परिफुल्लताविलसितेन विस्मयात् ।
तमवेक्ष्य धर्मजमधर्मदुर्लभंमनसेति भूरितरमानसोऽस्मरत् ॥ ८.९ ॥

जगतां चतुर्दशतयं चतुर्मुख प्रमुखैर्युतं प्रळयमानिनाय यः ।
सममुल्लसन् कमलयैव केवलं परमः स एष हि पुराणपूरुषः ॥ ८.१० ॥

त्रिगुणाकृतिप्रकृतितो गुरुं ततः त्रिविधामहंकृतिममर्त्यखान्यतः ।
अपि भूतपंचकमितोऽडमंडलं भगवानसाविह जगंति चासृजत् ॥ ८.११ ॥

विधिवायुवींद्रशिवकौशिकेशकान् अमरामरानुगनरासुरादिकान् ।
सृजति प्रपालयति हंति संततं स्वगतिं प्रयापयति चैष लीलया ॥ ८.१२ ॥

अगणय्यसद्गुणगणो विदूषणः स्ववशाखिलोऽप्यनुपचारतः स्वयम् ।
स्मृतिकीर्तनप्रणतिभिर्विमुक्तये स्वजनस्य यात्ययमनेकरूपताम् ॥ ८.१३ ॥

चतुराननाय चतुरः पुराऽऽगमान् प्रददावसावनिमिषेश्वरः प्रभुः ।
विनिहत्य हि श्रुतिमुषं पुरातनं वपुषोद्धतं हयमुखेन सद्रिपुम् ॥ ८.१४ ॥

अमरेंद्रवैरिभुजदंडमंडलप्रतिकर्षपुष्करपतद्धरोद्धृतिः ।
विदधे वराहवपुषाऽमुनोर्मिमत्स्मृतिसिंधुकच्छपतयाऽऽप्तरक्षिणा ॥ ८.१५ ॥

नरसिंह ऐष विददार दारुणं प्रतिघोदयेनखरचक्रतेजसा ।
स्वरिपुं क्षणेन सरसः स्फुरत्तनुं पृथुसत्वमिष्टजनभीतिभंजनः ॥ ८.१६ ॥

अपि वामनो लळितबाल्यवानयं प्रतिभाबलेन कृतदैत्यकौतुकः ।
उपधेरधः कृतबलींद्रशात्रवः स्वजनाय केवलमदात् परं पदम् ॥ ८.१७ ॥

कथयंत्यमुं परशुभासमानगोहतमर्त्यदेवतमसं मुहुर्मुहुः ।
जगतां हितं हरिमिवापरं हरिं गुरुशक्तितापसवरान्वयोद्भवम् ॥ ८.१८ ॥

करुणाकरः सवसुदेवमोददो भगवान् पुराऽहिमकरान्वयेऽभवत् ।
जितवान् दिशो दशरथोऽग्र्यसंपदो जनको बभूव भुवि यस्य वैरिहा ॥ ८.१९ ॥

भुजगेश्वरोऽपि भुवनेश्वरप्रियः समजन्यथारिदरजन्म भुव्यभूत् ।
तममुष्य कांतिविजितेंदुमग्रजं रमणीयमाहुरिह रामनामकम् ॥ ८.२० ॥

जनकेन सोऽथ विरहासहिष्णुना मुहुरीक्षितो वनमनीयत प्रभुः।
चकितेन दुष्टजनतस्तपस्विना तत आसुरीं निशिचरीं जघान सः ॥ ८.२१ ॥

मुनिसप्ततंतुकृतवैरबंधनं कटुकेश्यरिष्टपदमुख्यदुर्जनम् ।
क्षपयंतमुद्यतसुबाहुमाहवे तमथाभ्यनंददमरादिसद्गणः ॥ ८.२२ ॥

सवने विकस्वरगुणस्वरद्विजे स्फुरिते चरन् सकलगोकुलप्रियः ।
इतकामतापसरसार्द्रधीगिरः प्रतिलाळयन्नरमतैष सुंदरीः ॥ ८.२३ ॥

सहजान्वितः सकलमित्रसंयुतो मधुरां पुरीं जनकवल्लभां गतः ।
प्रविशन्निमां स जगदेकसुंदरो नरनार्युदारनयनोत्सवोऽभवत् ॥ ८.२४ ॥

अथ खंडितेश्वरधनुः स लीलया क्षपितोग्रसेननृपपुत्रपौरुषः ।
समुपास्य विप्रगुरुमब्जभूगुरुः स्वजनानमोदयदमेयतेजसा ॥ ८.२५ ॥

कमलामयं कमलपत्रलोचनां भुवमागतां नृपसुतां गृहीतवान् ।
निजलीलया विजितराजशात्रवो मुदमापदाप्य पुरमब्धिदुर्गमम् ॥ ८.२६ ॥

स जगाम मातृजनतुष्टये किल त्वरितोऽवनं विदधदीप्सितं सताम् ।
सह भार्ययाऽपि शुभया महाजयध्वजलक्ष्मणाग्र्यसुहृदा विना[ऽ]मुदा ॥ ८.२७ ॥

समतीतपर्वतपुरोगदुर्गमः खरदूषणादिसुजनद्विषो बहून् ।
स निहत्य विश्वभयदं सुदुस्सहं नरकं महातम उतानयत् क्रमात् ॥ ८.२८ ॥

रुचिराश्रमाजिरचिताग्र्यतेजसा प्रियया प्रियो भुवनमान्यया समम् ।
भृशमाकुली कृतमदप्रमादवत्सुरपारिजातहृदवाप धाम सः ॥ ८.२९ ॥

हरितामधीशनरदेवमंडलं दशकं विजित्य परभीषणं मुहुः ।
स्फुरितामिह प्रियतमां निजश्रियं भगवानुपैक्षत हरंतमप्रियम् ॥ ८.३० ॥

अभिनंदितः पवननंदनादिभिः स कदाचिदिंद्रसुतवर्धको गवा ।
निजराज्यमात्मदयिताय दत्तवान् हरिसूनवे हतविपक्षमुत्तमम् ॥ ८.३१ ॥

मुदमाप्य तत्र दयितोरुवार्त्तया मधुहा मरुत्सुतमुखप्रवृत्तया ।
हरितिग्मचक्रलसितोऽब्धिमध्यगं प्रययौ स पुण्यजनसेवितं पुरम् ॥ ८.३२ ॥

पृथुकुंभकर्णगजराजमुद्धतं ससहोऽदरं सविबुधेंद्रशात्रवम् ।
धरणीभरं पृथुलचक्रमक्षिणोत् निशितेषुचक्रकृतविक्रमः प्रभुः ॥ ८.३३ ॥

अथ भार्यया हुतवहं प्रविष्टया सहितः सहोदरपुरस्सरैरपि ।
अयमाप्य धाम चिरमिश्टदः सतां निजमूलरूपपरमैक्यमेयिवान् ॥ ८.३४ ॥

महिदासपूज्यचरणो द्विजादभूद् विदितात् स विष्णुयशसोऽमलात्मनः ।
इह यो दधे जगति पापशांतये बहुधामहेतिमतिदीप्तगोस्थितिम् ॥ ८.३५ ॥

सुतपोरुचेरयमपापकर्दमात् ननु मानवी तनयतामुपेयिवान् ।
समयेन भूरिनिजभक्तिपूरितान् समजीजनत् सुमनसः स देवराट् ॥ ८.३६ ॥

सुबृहत्पयोधरमिथः प्रसंहतिप्रकटीभवत्परमयौवनाकृतिः ।
असुराहितां वरविलासिनी तनुः प्रददावमुष्य सुरराशये सुधाम् ॥ ८.३७ ॥

सुजनाय दत्तपद आत्मशुद्धिदः सुकुमाररूप्यभवदेष शाश्वतः ।
अनसूयया शुचिमनीषया धृतः परमादरेण मुनिपुंगवोढया ॥ ८.३८ ॥

दयितः सतामृषभ एष भूधरो वपुरुद्वहन् परमहंस लक्षणम् ।
व्यहरद्वलक्षतमपक्षशोभनं परतत्वलिप्सुसनकादिवंदितः ॥ ८.३९ ॥

उदपादि धर्मतनयो ह्ययं हरिः नरदेवसोदर उदारविक्रमः ।
अपि कृष्ण इत्यभिहितो मुदे सतां स्वयमेव यस्य सहजो व्यजायत ॥ ८.४० ॥

परमात्मने सततमेकरूपिणे दशरूपिणे शतसहस्ररूपिणे ।
अविकारिणे स्फुटमनंतरूपिणे सुखचित्समस्ततनवे नमोनमः ॥ ८.४१ ॥

इति चिंतयन्नविरळांतरो हरिं प्रणनाम सप्रणयमादृतोऽमुना ।
अजितौ परस्परसभाजितौ स तौ निकषा निषीदति पुरोपवेशिनौ ॥ ८.४२ ॥

विविधा विधाय किल तत्र संकथाः वदनं मुनींद्रतनयस्य सुंदरम्।
अवलोक्य लोकपतिरानतं महासुखतीर्थमाह रहसि स्म गामिमाम् ॥ ८.४३ ॥

शृणु देवकार्यमवधार्य धैर्यवद् युदुदीर्यमाणमिदमार्यसम्मतम् ।
भविताऽन्यदुष्करतरं विधाय तत्तरुणं तवावतरणं महाफलम् ॥ ८.४४ ॥

अपिधाय सूत्रहृदयं सतां प्रियं प्रविधाय भाष्यमधुना निजेच्छया ।
अपरैः श्रुतिस्मृतिनिजार्थदूषकैः सुतरां तिरोभवति संविदाहता ॥ ८.४५ ॥

अपनेतुमेनमनयं कृतं खलैः प्रतिनेतुमात्मजनतां शुभां गतिम् ।
कुरु सूत्रभाष्यमविलंबितं व्रजेः सुमतेन योजय कवे श्रुतिस्मृतीः ॥ ८.४६ ॥

अमितां मितामपि गिरं जगद्गुरोः इति तां निशम्य विरळेतरांतरः ।
वदतां वरस्तमवदत् तदा तयोः विरहाक्षमः खलु चराचरेशयोः ॥ ८.४७ ॥

भवतोरितः सततसेवनामृते मम मंक्षुमस्तु भगवन्ननुग्रहः ।
न लभेय वल्लभतमेदृशं सुखं जगतां त्रयेऽपि जगदेकमंगलम् ॥ ८.४८ ॥

कलिकालकालितगुणे धरातळे सुजनो न नूनमधुनाऽस्ति योग्यधीः ।
परतत्त्ववर्णनमयोग्यतावते ननु हव्यदानमिव निंद्यते शुने ॥ ८.४९ ॥

इति तं ब्रुवाणमयमब्रवीद् विभुः भुवि संति सौम्य पुरुषा गुणोचिताः ।
विमलान् मणीनिव गुणोज्झितानिमान् दयया विशोधय विशुद्धगोगणैः ॥ ८.५० ॥

तव कीर्तिरार्तिमतिमात्रमानयेदशुभान् प्रभाकरविभेव कौशिकान् ।
कमलाकरानिव शुभान् प्रबोधयेत् परमाज्ञया मम विशेषतोऽनिशम् ॥ ८.५१ ॥

इति सा महीधरमुखाद् विनिःसृता जगतां सुखाय विशदा सरस्वती ।
द्विजराजगोविषयतातिपूरितं प्रविवेश मध्वपृथुबुद्धिवारिधिम् ॥ ८.५२ ॥

मतमित्यवेत्य महितं महतोः अभिधाय बाढमिति धीरमतिः ।
अनयोर्नियोगमधिरोपितवान् स्वशिरस्यनन्यसुवहं प्रणमन् ॥ ८.५३ ॥

आम्नायास्त्रय इव तत्त्वबोधकास्ते पापघ्नास्त्रय इव पावकाः प्रजानाम् ।
लोका वा सकलभृतस्त्रयोऽत्र रेजुः सानंदा मुनिसुतधर्मसूनुमध्वाः ॥ ८.५४ ॥

**॥ इति श्रीमत्कविकुलतिलक त्रिविक्रमपंडिताचार्यसुत**
**नारायणपंडिताचार्यविरचिते श्रीमत्सुमध्वविजये**
**महाकाव्ये आनंदांके अष्टमः सर्गः ॥**

## ९. नवमः सर्गः

चोदयंतमथ गंतुमादरात् तत्र धर्मजमजं प्रणम्य सः ।
सौख्यतीर्थकविलोकनायको वेदनायकपुरस्सरो ययौ ॥ ९.१ ॥

आश्रमांतरमवाप्य कृष्णतः श्राव्यमेष सकलं च शुश्रुवान् ।
चित्तवृत्तिमनुवृत्तिमान् गुरोः साध्ववेत्य गमनोन्मुखोऽभवत् ॥ ९.२ ॥

मंदहासमृदुसुंदराननं वंदनीयमभिवंद्य सत्पतिम् ।
प्राज्ञमौलिमणिरभ्यनुज्ञया तस्य तावदगमन्महामतिः ॥ ९.३ ॥

तस्य वल्लभतमाऽऽस वासभूः मानसात् पृथुलमानसस्य नो ।
नात्यजत् क्षणमपि ह्यसाविदं नैष नाथविरही ततोऽभवत् ॥ ९.४ ॥

वीरदृष्टिकृतसिंहविभ्रमः शांतदृष्टिकृतशांतसम्मदः ।
तत्रतत्र पथि पथ्यविभ्रमः पर्वतादवततार सर्वधीः ॥ ९.५ ॥

वानरेंद्र इव तीर्णवारिधिः वासुदेव इव रत्नराजवान् ।
भीमसेन इव सूनवर्यहन्निर्वृतिं स्वजनमानिनाय सः ॥ ९.६ ॥

अग्निशर्ममुखपंचषैर्द्विजैः अन्नमाहृतमलं पृथक् समम् ।
कृत्स्नमाददयमित्यविस्मयः कृत्स्नमत्तुमलमेष हि क्षये ॥ ९.७ ॥

व्यासदेवहृदयातिवल्लभं वासुदेवमगणय्यसद्गुणम् ।
साधयत् सकलदोषवर्जितं ज्ञानभक्तिदमनंतसौख्य दम् ॥ ९.८ ॥

उक्तमुक्तमभिधेयमुत्तमं वेदवाक्यमनुवादयन्मुहुः ।
व्यंजयत् स्मृतिवचोभिरंजसा तस्य चार्थमतियुक्तयुक्तिमत् ॥ ९.९ ॥

बालसंघमपि बोधयद् भृशं दुर्निरूपवचनं च पंडितैः ।
अप्रमेयहृदयं प्रसादवत् सौम्यकांति च विपक्षभीषणम् ॥ ९.१० ॥

अस्तदूषणमवंध्यभाषणं लक्षितं सकललक्षणैः समम् ।
माननीयमपि नाकिनायकैः रूपमन्यदिव धन्यमात्मनः ॥ ९.११ ॥

ऐकविंशतिकुभाष्यदूषकं ब्रह्मसूत्रगणभाष्यमद्भुतम् ।
अप्यदूष्यमतनोदनंतधीः भूतभाविभवदात्मभिः क्वचित् ॥ ९.१२ ॥

गांगमंगलतरंगभंगदप्रांतसुश्रिहरिवेश्मकृत्समः ।
यद्गतैकतमवर्णलेखकः सत्यतीर्थ इह भाष्यमालिखत् ॥ ९.१३ ॥

तत्र देवमभिवंद्य यातवान् स्वामिनो वचनगौरवाद् द्रुतम् ।
सानुगो विविधभूरतीत्य गोदावरीतटमगादलेशधीः ॥ ९.१४ ॥

प्राज्ञवित्तमयमाप्तुमागतैः पंडितैर्द्विनवशाखिभिः श्रुतीः ।
प्रस्तुता अभिदधौ परीक्षकैः षट् च तत्र समयानखंडयत् ॥ ९.१५ ॥

ते पृथक्पृथगमुं स्वशाखया दर्शनेन च परीक्ष्य निर्जिताः ।
सर्ववित् त्वमसि मुख्यतः कवे नास्ति ते सदृश इत्यथाब्रुवन् ॥ ९.१६ ॥

यस्त्रयीसकलपक्षशिक्षकः तत्र संसदि वरिष्ठसम्मतः ।
शोभनोपपदभट्टनामकः पूर्णसंख्यमनमन्मुहुर्मुदा ॥ ९.१७ ॥

यस्तु तार्किकशिखामणिः सुधीः वर्तमानसमयान् निराकरोत् ।
वेदभारतपुराणनिष्ठितो भाष्यमेतदशृणोत् स मध्वतः ॥ ९.१८ ॥

नापरेषु रतिमाययौ क्वचिद् भाष्यमद्भुतमिदं स शुश्रुवान् ।
नारविंदमकरंदमाप्तवान् अच्छपिच्च इव वांछतीतरत् ॥ ९.१९ ॥

तत्रतत्र स सुसभासु भासुरो नंदितीर्थसमयोक्तयुक्तिभिः ।
वादिनो विशकलय्य तान् समाक्रम्य वाचमुचितामुदाहरत् ॥ ९.२० ॥

चूर्णकृद्विविधशंखचूर्णकः चूर्णनाय बहुधाऽप्यशक्नुवन् ।
अत्यजद् विफलधीः प्रदक्षिणा वर्तवारिजमनर्घ मप्यहो ॥ ९.२१ ॥

अप्रमेयमतिशास्त्रमीदृशं यस्त्यजत्युपनतं सुदुर्लभम् ।
तस्य तुल्यमतिरेष दुर्जनो नाथवाऽस्य सदृशोऽस्ति नीचधीः ॥ ९.२२ ॥

कोऽपि तं गुणविशेषविच्च विक्रीय भूरिधनमाप पूरुषः ।
न ह्यनर्घगुणमूल्यमाप्यते भाग्यदैवमिह योग्यतानुगम् ॥ ९.२३ ॥

व्यक्तमुन्नतिमितोऽप्ययं जनः तस्य यन्न लभतेखिलं फलम् ।
स्तोकमानसतया ततो व्रजेत् तस्य हंत पुरुषस्य तुल्यताम् ॥ ९.२४ ॥

क्रीतवान् नरपतिर्महादरं सादरं पुनरुदारचेष्टितः ।
अर्चयन् सततमाप संपदो या न ता वचनचित्तगोचराः ॥ ९.२५ ॥

शास्त्रकल्पकतरोरमुष्य कः प्राप्नुयात् सकलमप्यहो फलम् ।
यस्तमुत्तमगुणं विडंबयेद् इत्युदीर्य स जनानरंजयत् ॥ ९.२६ ॥

नेदृशैः कविभिरेव केवलं हंत पूज्यचरणोऽभ्यपूज्यत ।
शर्वशक्रगुरुपूर्वदैवतैः अप्यलं सुसमयोद्गमोत्सवे ॥ ९.२७ ॥

निम्नभूरिव सतीः प्रजा व्रजन् वारिदर्तुरशनैरपूरि सः ।
प्राज्यतापहरदर्शनांबुना तुंगदेशमिव दुर्जनं तु नो ॥ ९.२८ ॥

कर्मभिः सकललोककौतुकैः मानितः पथि जनैः समागतः ।
सन्ननाम शिवनामकीर्तनं राजतासनपुरे विराजितम् ॥ ९.२९ ॥

अच्युतप्रमतिरच्युतप्रियं तं दशप्रमतिमागतं तदा ।
वंदमानमवलोक्य यां मुदं प्राप्तवांस्तदवधिर्न विद्यते ॥ ९.३० ॥

प्रीतिमार्ययतिरुत्तमां पुरा प्रेषिताप्रतिमभाष्यदृग् ययौ ।
अप्यतोऽतिशयिनीं शुचिस्मितं तं विलोक्य सुचिराद् दिदृक्षितम् ॥ ९.३१ ॥

पूर्णदृष्टिजलधेर्गृहीतवान् भाष्यसंज्ञममृतं सुखावहम् ।
चित्रमेष यतिराड्घनाघनो ग्राहयंश्च मनुजान् मुमोच नो ॥ ९.३२ ॥

सानुनीतिरथ नीतिमानयं भाष्यसद्गुणगणानवर्णयत् ।
शोभनाय गुरवे स्वभावतः कालतः कुमतलीनबुद्धये ॥ ९.३३ ॥

उक्तिभिस्तमसकृत् सुयुक्तिभिः बोधयन् बहळधीः प्रसंगतः ।
स्थेयसो भिषगिवास्य हृद्गतं मूलदोषमरुचेरचिंतयत् ॥ ९.३४ ॥

दक्षपक्षविहृतेन ताडयन् भीषयन् समधिकस्वरश्रिया ।
हंसराट् कलिमलं निराकरोदेकदृष्टिमिव मानसाद् गुरोः ॥ ९.३५ ॥

निष्कळंकमिव चंद्रमंडलं पुंडरीकमिव फुल्लतां गतम् ।
वारि शारदमिव प्रसादवत् चित्तमच्युतमतेर्भृशं बभौ ॥ ९.३६ ॥

आननंद स हि मध्वशास्त्रमाकर्णयन् कुसमयाग्रही पुरा ।
मोहपीतलवणोदकॊ मुहुः प्राक् पिपासुरमृतं पिबन्निव ॥ ९.३७ ॥

विस्तृतांतरवियत्पदौ यती आस्यतां सुसमयप्रकाशनात् ।
तौ यथा विधुरवी अहो अहोरात्रमप्युरुतमो नृमोहकम् ॥ ९.३८ ॥

सज्जनान् सह महादरेण नॄन् पापिनां प्रकृतितोऽप्रियाकृति ।
दारुणाघगणदारणं स्म स ग्राहयत्यपि सुदर्शनद्वयम् ॥ ९.३९ ॥

नन्वनन्यशरणात्मनां सतां सिद्धिविघ्नमुखदोषभेषजम् ।
ऐच्चदच्चलदयोदयादयं रूप्यपीठपुरगः कदाचन ॥ ९.४० ॥

गोपिकाप्रणयिनः श्रियःपतेः आकृतिं दशमतिः शिलामयीम् ।
शिष्यकैस्त्रिचतुरैर्जलाशये शोधयन्निह ततो व्यगाहयत् ॥ ९.४१ ॥

स्पर्शनाद्भगवतोऽतिपावनात् सन्निधानपदतां गतां हरेः ।
त्रिंशदुद्यतनरैः सुदुर्धरां लीलयाऽनयदिमामसौ मठम् ॥ ९.४२ ॥

मंदहासमृदुसुंदराननं नंदनंदानमतींद्रियाकृतिम् ।
सुंदरं स इह सन्न्यधापयद् वंद्यमाकृति शुचिप्रतिष्ठया ॥ ९.४३ ॥

मानिनोऽपि हि वशीचकार यो दैवतप्रतिभयाऽऽत्मनः खलः ।
यायजूकगुणमात्मनः स्मरन् यो जराघटितगोत्र उच्यते ॥ ९.४४ ॥

आत्मनः प्रियतमक्रतोरमुं पापपूरुषमवेत्य घातुकम् ।
तं निरस्य जनमप्यथाहितं सर्वभूधरसमर्थपूर्वकम् ॥ ९.४५ ॥

विश्वविस्मयकरः स्वतेजसा वंद्यमानचरणः पुनर्जनैः ।
चित्रदिग्विजयकीर्त्यकीर्तिमान् मोदयन्ननुदिनं निजाः प्रजाः ॥ ९.४६ ॥

वासुदेवदयितो महिष्ठधीः वासुदेवमथ साध्वयाजयत् ।
धर्मसूनुमिव धार्मिकं पुरा भीममूर्तिरयमेव भूसुरम् ॥ ९.४७ ॥

याज्यया समुचितानुवाक्यया सप्रवर्ग्यविभवैरभिष्टवैः।
विश्ववेत्तुरनुजोऽत्र होतृतां प्राप्य दैवततीरतोषयत् ॥ ९.४८ ॥

स प्रयुज्य निशिता निशातधीः वैश्वदेववरशस्त्रसंततीः ।
राक्षसासुरनिरासकृत् सुरान् वीरवर्य इव भागमापयत् ॥ ९.४९ ॥

वायुना त्रिरपि पूर्वपायिना सर्वदैवतजिता तरस्विना ।
योऽपरोक्षवपुषाऽप्यपेक्षितः कोऽत्र वर्णयति तं महाक्रतुम् ॥ ९.५० ॥

ब्रह्मवेदननिविष्टचेतसां कर्म तत्र करणांतरं भवेत् ।
ज्ञापयन्निति परात्मवेदकः कर्म धर्ममपि स ह्यचीकरत् ॥ ९.५१ ॥

यानियानि चरितानि यानियानीरितानि च मनोहराण्यहो।
तानितानि च वितानिचेतसो विश्वविस्मयकराणि भांति हि ॥ ९.५२ ॥

सरस्वतीर्वृत्तिकरीः शरीरिणां अतीत्य बह्वीः समतीतगोत्रकः ।
पुरेव कृष्णप्रियमापदश्रमं पृथुप्रबोधः पुनरुत्तमाश्रमम् ॥ ९.५३ ॥

सहभोगमनन्यलभ्यमस्मै हनुमद्रूपवते ददौ पुरा हि ।
अनवेक्ष्य परं स्वभीष्टकर्त्रे प्रतिदातुं हरिरैधयत् तमेव ॥ ९.५४ ॥

प्रणम्य गुरुमादरादथ नियोगतो योग्यतः
स तस्य जगतां हितं विदधतो गतः सानुगः ।
महिष्ठहृदयो महामहिमसिंधुरानंदतो
निजैरभिगतोऽनमद् रजतपीठवासं हरिम् ॥ ९.५५ ॥

**॥ इति श्रीमत्कविकुलतिलक त्रिविक्रमपंडिताचार्यसुत नारायणपंडिताचार्यविरचिते श्रीमत्सुमध्वविजये महाकाव्ये आनंदांकिते नवमः सर्गः ॥**

## १०. दशमः सर्गः

सपदि समस्कुरुत भृशं माधवगुणसाधकोऽथ मध्वरविः ।
भृगुकुलतिलकस्थानं तापकरः पापपांथानाम् ॥ १०.१ ॥

दशमतिशिश्यः कश्चित्शुभजनतायै कुतूहलनतायै ।
विविधसुवृत्तं वाक्यं काव्यमिवोचे सनायकस्तवकम् ॥ १०.२ ॥

भुवनाद्भुतमध्वचेश्टितं न वदेमापि सुरायुशा वयम् ।
सकलं खलु किंतु किंचिदप्यथ शुश्रूशुजनाय वर्ण्यते ॥ १०.३ ॥

क्वचिदीश्वरदेवमेश भूपं खननं पांथजनंविधापयंतम् ।
स्वमपि प्रतिचोदयंतमूचे क्रियया नोऽकुशलान् प्रबोधयेति ॥ १०.४ ॥

प्रकारं प्रकटीकर्तुम् आरभ्य विरराम नो ।
महीयोमतिमाहात्म्याद् वैवश्येन खनन् खलः ॥ १०.५ ॥

नानेनेनानेनानेनोनूनेन ननु नुन्नाः ।
नानाना नो नूनं नानेनानूननाऽनुन्नः ॥ १०.६ ॥

यमशेषभवप्रभवः स्मरतामसुखाब्धिरपैति न चित्रमिदम् ।
मरुतीदृशि भांति हि यत्स्तवने यमशेषभवप्रभवः स्मरताः ॥ १०.७ ॥

संचरन्नंचनीयः कदाचिद् विभुः विष्णुपद्यास्तटं वैष्णवाग्रेसरः ।
प्रापदाप्तैर्निजैरेष शिष्यैर्वृतः त्यक्तविश्वप्लवं शात्रवातंकतः ॥ १०.८ ॥

इमान् स्वस्वपूर्वाश्रयानात्मवाक्यात् सलीलं दयालुः स मूलाश्रयात्मा ।
निषेद्धूननादृत्य चानन्यलंघ्यां तदाऽत्याययत् तां नदीं संसृतिं वा ॥ १०.९ ॥

वारयतवारयत वैरिसुहृदोऽमून् मारयतमारयत पारगमनात् प्राक् ।
आपतत आलपत इत्यवददुच्चैः स त्वरकराजपुरुषानुचितवाचा ॥ १०.१० ॥

न जडा जले पतत साहसादहो न भयं हि वो बहुतयाऽबहोर्जनात् ।
भवतां पतिं क्षितिपतिं दिदृक्षवः प्रतियाम केन कलहं चिकीर्षथ ॥ १०.११ ॥

वचसेत्यनेन स परान् न्यरुणद् भुजगान् नरेंद्र इव मंत्रबलात् ।
उदतारयत् परिजनं मृतिभीसरितश्च देवसरितश्च समम् ॥ १०.१२ ॥

निर्विकारचरितोऽपि परीतः क्रूरकिंकरसहस्रतयेन ।
स व्रजन्नुदलसज्जगदीशः सिंहराडिव सृगालसमूहे ॥ १०.१३ ॥

अप्रकंप्यवपुषं सुरासुरैः सिंहसंहननमेनमुन्नतम् ।
प्राप्तमात्मनगरांतिकं नृपः प्रेक्ष्य सौधशिखरे स्थितोऽब्रवीत् ॥ १०.१४ ॥

रिपुनृपप्रणिधिप्रतिशंकया पथिकपाटनकर्मणि दीक्षितैः ।
सुमुख मे पुरुषैः परुषैः कथं यमभटैरिव नासि विहिंसितः ॥ १०.१५ ॥

अप्लवदेवनदीतरणं ते हंत कथं च चिकीर्षसि किं त्वम् ।
तं निगदंतमितिप्रभृतीह स्माऽह महापुरुषोत्तमदासः ॥ १०.१६ ॥

योऽसौ देवो विश्वदीपः प्रदीप्तः कुर्मः सर्वं तत्परानुग्रहेण ।
यामस्तावत् तूर्णमाशामुदीचीम् इत्याद्यं तद्भाषया चित्रवाक्यम् ॥ १०.१७ ॥

गांभीर्यं धृतिमुरुवीर्यमार्यभावं तेजोऽग्र्यं गिरमपि देशकालयुक्ताम् ।
राजाऽस्य स्फुटमुपलभ्य विस्मितोऽस्मै राज्यार्धं सपदि समर्पयांबभूव ॥ १०.१८ ॥

दंडार्हबुद्धिविषयो नृपपूरुषाणां
राज्यार्हबुद्धिविषयोऽभवदित्थमेषः ।
नीतिं प्रकाशयितुमेव विपत्सु कार्यां गंतुं
प्रभुः प्रसभतोऽपि तथा व्यधात् सः ॥ ।१०.१९ ॥

कदाचिच्चोराणां निकरमवलोक्याभिपततां
अवस्थाप्य स्वीयान् करगपटपिंडार्थमतिकृत् ।
चरन्नेतेष्वेतानथ मिथ इहाघातयदहो
विभुः सम्मोह्य प्राग् विजय इव संशप्तकगणान् ॥ १०.२० ॥

अन्यत्र च चोरान् धन्यप्रवरोऽसौ शूरान् शतसंख्यान् प्राप्तान् स्वजिघांसून् ।
एकेन तु शिष्येणाऽकृष्टकुठारान् निस्ताडितयूथ्यानद्रावयत द्राक् ॥ १०.२१ ॥

क्वचिच्छिला च्छटाभ्रमादमुं ससंघमत्यजन् ।
अवेक्ष्य दस्यवः पुनः कुतूहलात् तमानमन् ॥ १०.२२ ॥

सत्योच्छेदे सेच्छापातं व्याघ्राकारं दैत्यव्याघ्रम् ।
प्राळेयाद्रेः प्रांते प्राज्ञः पाणेर्लीलालेशेनाऽऽउत्यस्यत् ॥ १०.२३ ॥

प्राप स नारायणतः शुद्धशिलात्मप्रतिमाः ।
यासु स पद्मासहितो दोष्यहितः सन्निहितः ॥ १०.२४ ॥

पाराशर्यः परतत्वप्रसिद्ध्यै तात्पर्यार्थं परमं भारतस्य ।
व्यक्तं वक्तुं नियुनक्ति स्म साक्षाद् एनं धन्यं भुवने मन्यमानः ॥ १०.२५ ॥

तीर्थेषु तीर्थेषु च सौख्यतीर्थः क्षेत्रेषु च क्षेत्रविदां वरिष्ठः ।
गोविंदमावंद्य सहानुगोऽगाद् गंगां पुनस्तुंगतरंगमालाम् ॥ १०.२६ ॥

प्लवैरपेतामवलोक्य सिंधुं सरोजबंधुं च तदाऽऽप्तसिंधुम्
तटे निषण्णानधिकं विषण्णान् निरीक्ष्य शिष्यानतरत् स एताम् ॥ १०.२७ ॥

न वानरेंद्रस्य विलंघिताब्धेः न वा नरेंद्रस्य विहर्तुरस्याम् ।
इमेऽस्मरंस्तद्वपुषोऽन्यथाऽस्य शक्तस्य शंक्येत विपत् कथं तैः ॥ १०.२८ ॥

जगत्प्रदीपायितगोगणाढ्ये दिवाकरे मध्वदिवाकरे च ।
अव्यक्तरूपे श्रियमत्यजन् द्राक् सहांबुजैस्तन्नयनांबुजानि ॥ १०.२९ ॥

पदं पशोर्वा विनतातनूजः तीर्त्वा नदीं तावददीनसत्त्वः ।
अनार्द्रवासाः स कुतूहलार्द्रैः नृदेवभूदेवमुख्यर्ववंदे ॥ १०.३० ॥

भीतैररातेरतिमात्रमत्र नतारकैरप्यथ तारकैः सः ।
स्वतेजसा विस्मितभूपनुन्नैः प्लवेन शिष्यान् निरतारयत् ताम् ॥ १०.३१ ॥

विशंकटं स्वस्तटिनीतटं ते दीपप्रदीप्तं जनताभिपूर्णम् ।
संचोदयत्पंडितमंडलाढ्यं नाथावलोकोत् कहृदोऽभ्यपश्यन् ॥ १०.३२ ॥

आम्नायमाम्नायविदां विदग्धं सभावभेदं प्रवदंतमत्र ।
दैव्यां सभायामिव पद्मयोनिं प्रैक्षंत साक्षात् सुखतीर्थमेते ॥ १०.३३ ॥

प्राप्तस्ततो हस्तिनराजधानीं मासानुवासेह स वासयोग्यान् ।
मठांतरेऽनंतगुणांतरः सन् एकांतदेशे सरितोऽसमीपे ॥ १०.३४ ॥

भित्त्वा भुवं देवनदी जगाम शाखाविशेषेण निषेवितुं तम् ।
वाणी च यत्प्रेष्यतया कृतार्था शिवादिवंद्या न तदत्र चित्रम् ॥ १०.३५ ॥

गुरुप्रबर्हस्य पदारविंदं विदूरतः सा प्रणनाम मूर्ता ।
औदार्यसौंदर्यतनुं तनुं तां आलक्ष्य शिष्यैरतिविस्मितं तैः ॥ १०.३६ ॥

तेनोपयातेन कदाचनाथ वाराणसीं पापनिवारणेन ।
अवादि वाणी बलिनः स्वशिष्यान् विलोक्य लीलावसरेऽवलिप्तान् ॥ १०.३७ ॥

नियुद्धसिद्ध्यै युगपद्धि वीरम् मन्या भवंतोऽभिपतंतु मां द्राक् ।
समस्तशक्तिं न युनक्ति यः स्वां अत्रास्मदाज्ञां स निराकरोति ॥ १०.३८ ॥

इतीरयन् पंचदशैष यूनः प्राप्तान् प्रयुद्धान् युगपन्निपात्य ।
उत्थीयतां यस्य समर्थता स्याद् इति ब्रुवाणः शनकैर्जहास ॥ १०.३९ ॥

सौमेरवं गौरवमावहंति तवांगमंगांगुलयश्च नोऽंगे ।
पुरा विनश्याम इतो दयालो स्वामिन् विमुंचेत्यवदंस्तदा ते ॥ १०.४० ॥

तेनाथ मुक्तैरतिविस्मयस्तैः अवाप्यनालोच्य हि तत्स्वरूपम् ।
यद्भ्रूविजृंभेण सशंभुशक्रं जगत् समस्तं नियतं निकामम् ॥ १०.४१ ॥

सदाक्ष्यमाक्षिप्तसमस्तपक्षको यतिः प्रभुं कोऽप्यमरावतीपदः ।
जिगीषया ज्ञानसहायकर्मणः प्रसाध्यतां साधनतेत्युदाहरत् ॥ १०.४२ ॥

संसाधितार्थे भगवत्ययुक्तिवित्
पप्रच्छ स ज्ञानपदार्थमुग्रधीः ।
ज्ञातः स ते ज्ञान्यसि चेन्न चेन्न स
प्रश्नो घटेतेति निराकृतैष तम् ॥ १०.४३ ॥

विततततमतमोऽतं साधयंत्या नितांतं
सदसिसदसि रेजे व्याख्यया व्यासशिष्यः ।
सकलसमयिहस्तांभोजबंधाभिनंदी
शरदिशरदि चंद्रश्चंद्रिकासंपदेव ॥ १०.४४ ॥

जननं समयेसमये जगतः प्रथिते समये समयेदमिते ।
सनिरासमयेऽसमये स्थितियुक् स्ववभासमयेऽसमयेष्टधिया ॥ १०.४५ ॥

वर्तस्वाध्यधि सर्वं दीव्येदं सोऽनिशं स्वतंत्रो विष्णुः
उज्जासय दुष्टानां संस्कुरु साधून् गुणाभिपूर्णोऽप्यगुणः ॥ १०.४६ ॥

असमोत्तमो मतोऽसौ श्रियःपतिर्विश्वतो विभिन्नात्मा ।
परमान् प्रकाममर्थान् प्रकाशयामास सेत्यादीन् ॥ १०.४७ ॥

समानया याऽनमाऽऽस मायया ततयाऽयमा ।
नयासना नाऽस या न यातनाऽललनाऽतया ॥ १०.४८ ॥

प्राज्ञो राज्ञां त्रिदिवपदवीं कौरवं क्षेत्रमाप्तः
सस्माराथ स्वविहतिपतद्धस्तियुद्धोत्सवानाम् ।
सत्यात्माद्यैरिह परिवृतो भाविमारीचदृग्भिः विस्मेरैः
स्वैर्निजनृपतनूहेतिदृष्ट्याऽतितुष्टैः ॥ १०.४९ ॥

विप्रात्मेशः क्षणार्थं कृतनतिरशितिश्रीर्हृषीकेशदेशे स्पष्टं
दृष्टोऽप्यदृष्टः सपदि विहितवान् विस्मयं देहभाजाम् ।
स्वप्ने स्वप्रेरितान्यस्थलगनिजनरोपाहृतैर्भक्ष्यभोज्यैः
प्राज्यैः प्राभोजयत् स्वं गुरुमखिलगुरुं वेदयन् वेदबंधुम् ॥ १०.५० ॥

अवाप्तवान् पुनरिषुपातमस्मरद् रमापतिं स परशुराममादरात् ।
स राजकेळ्युरुकदळीसहस्रकं तदाऽऽददत्त्यवसितिदत्तमुत्तमम् ॥ १०.५१ ॥

स शंकरपदद्विजोपहृतमाप्य गोवाख्यगां
गरिष्ठकदळीलसद्दशशतीचतुष्कं चरन् ।
पयः कलशपंचकत्रिकयुगाभिपूर्णं पपौ
अदृष्टगतिरप्यभून्नृपनृमंडलैरुद्यतैः ॥ १०.५२ ॥

अयमेव गोविषयतोऽपि सदसि जनतार्थितो जवात् ।
पुष्पमुत फलमहो विदधे जनसुप्तिदानुपमगानसंपदा ॥ १०.५३ ॥

धन्योऽमह्यत नाकिनामहितहृद्वाणस्समोऽजस्ययो मध्वो
ध्वस्तदुरागमोऽग्र्यहिमगुश्रीः काममायामिहृत् ।
विष्णुं विश्वजयप्रदं स हि नमन् सेव्यं सुसौख्यं मुदा
दाक्ष्याच्छ्रीधरमामयादिविरही योगी सुहृत् सर्वदा ॥ १०.५४ ॥

इति भुवनविभूषणस्य भूयां स्यविगणितानि कृतांतराणि हंत ।
श्रवणमननकीर्तनैरभीष्टं प्रतिददतीत्यमराः प्रकीर्तयंति ॥ १०.५५ ॥

इति विविधगोधारावारैर्विशारदवारिदो
हरिपदरतो विद्याविद्युत्प्रदीपितदिङ्मुखः ।
भवभयमहाघर्मोत्तप्तं सदंघ्रिपमंडलं
सफलसुमनः सांद्रानंदं व्यधादविपल्लवम् ॥ १०.५६ ॥

**॥ इति श्रीमत्कविकुलतिलक त्रिविक्रमपंडिताचार्यसुत
श्रीनारायणपंडिताचार्यविरचिते श्रीमत्सुमध्वविजये
महाकाव्ये आनंदांकिते दशमः सर्गः ॥**

## ११. एकादशः सर्गः

प्रचुरांतरप्रवचनं फणिराड् उपशुश्रुवान् ससनकादिमुनिः ।
गगनेऽल्पदृष्टवपुरत्र जनैः त्वरितं निलीनरुचिराप पदम् ॥ ११.१ ॥

अतिचित्रधाम्नि निजधाम्नि रतं ससहस्रमस्तकमनंतममुम् ।
मुनयोऽभिवाद्य विनयाभरणाः वरमन्वयुंजत तदाऽर्थमिमम् ॥ ११.२ ॥

भगवत्तमस्य विपुलप्रमतेः समयं मनोहरतमं जगति ।
महितं भवद्भिरपि लोकपते पठतां मुहुः फलमुदेष्यति किम् ॥ ११.३ ॥

अधिकारिणां फलमलं विदुषां भवति प्रवृत्तिरतिवीर्यवती ।
इति तत्फलं सफलसंकथनो भगवान् प्रपंचयतु भूरिदयः ॥ ११.४ ॥

इति तैरुदीरितमुदारमतिः वचनं निशम्य स जगाद गिरम् ।
शृणुताऽदरेण महनीयतमं महनीयपादसमयस्य फलम् ॥ ११.५ ॥

त्रिदिवादि लभ्यमपि नास्य फलं कथितं कृषेरिव पलालकुलम् ।
स्वफलं तु मुक्तिपदमुक्तिपदं शुकशारदादिपरमार्थविदाम् ॥ ११.६ ॥

परमागमार्थवरशास्त्रमिदं भजताममानवकलारचितम् ।
व्रजतामहो परमवैष्णवतां रतये स्वलोकमजितो दिशति ॥ ११.७ ॥

ननु तत्र विश्वविभवैकपदं प्रतिभाति पूर्णपुरुषस्य पुरी ।
उपलभ्यते यदुपमानपदं प्रतिबिंबमेव मणिवप्रगतम् ॥ ११.८ ॥

सितसौधसंततिरुचा स्फुरिता परितोऽरुणाश्मगृहपंक्तिरुचिः ।
इह मच्छरीरवलये लसितां अनुयाति मूर्तिमसुरासु हृतः ॥ ११.९ ॥

शबळा वळीकघटितस्फटिकद्युतिभिर्हरिन्मणिमयी वळभी ।
प्रतिसद्म भाति यमुना मिळिता सितसौरसैंधवपयोभिरिव ॥ ११.१० ॥

यदि नाभविष्यदिह विभ्रमतानियमो जनस्य निलयावलिषु ।
विकटा विटंककृतपत्रितितिः कृतकेत्यवैक्ष्यत कथंचन नो ॥ ११.११ ॥

विविधस्तुलोपगतचित्रपटीसुवितानलंबिमणिदामगणः ।
शरणांतरेष्वधिकपूरणतः प्रचकास्ति विभ्रम इवावगळन् ॥ ११.१२ ॥

विमलाकृतिः प्रकृतिरेव महामणिहेममय्यखिलवस्तुमयी ।
इह संभवेत् सकलकांतिरसः कथितोऽधिकोक्तिभिरतः कविभिः ॥ ११.१३ ॥

तदनादिकालमितमुक्तिरतेःअगणय्यशंभुमुखसंघततेः ।
नगरैर्महापुरमसंहतिमत् लसति प्रभोरयमहो महिमा ॥ ११.१४ ॥

भवनं विभाति भुवनैकपतेःभुवनत्रयाद्भुतगुणातिशयी ।
वरमंदिरप्रकरमध्यगतं द्विजमंडलस्थशशिमंडलवत् ॥ ११.१५ ॥

स्वयमिंदिरैव पतिमानकरी गृहकर्म यत्र कुरुते सुतराम् ।
अपि किंकरीदशशतीमहिता श्रियमत्र वर्णयति वेश्मनि कः ॥ ११.१६ ॥

कमलापतिः कमलयाऽमलया कमनीयया कमललोचनया ।
अमृताहिराजमृदुभोगगतः स्वरतोऽपि तत्र रमते परमः ॥ ११.१७ ॥

तरुणप्रभाकरसहस्ररुचं कनकांबरं मणिमयाभरणम् ।
हसिताननेंदुमरविंददृशं तमरींद्रधारिणमनुस्मरत ॥ ११.१८ ॥

गणयेद् रमाऽस्य न गुणानखिलान् चतुराननश्चतुरवागपि नो ।
न वयं सहस्रवदना अपि तान् अपरोदितानतिवदेम पुनः ॥ ११.१९ ॥

विधयो विहंगपतयोऽगणिता रमणीयुताश्च फणिपेंद्रमुखाः ।
परयोगभूरिसुखभोगमिता अवलोक्य तं दधति मोदरसम् ॥ ११.२० ॥

सचतुर्भुजा वनजपत्रदृशो वरवेषिणोऽत्र सपिशंगपटाः ।
अरुणप्रभाश्च तरुणाभ्ररुचो विचरंति नाथरुचयः पुरुषाः ॥ ११.२१ ॥

भगवत्समीपमुपयातवतां प्रमदो न केवलमलब्धतुलः ।
अपि तस्य लोकमतिलोकगुणं भजतां सुदुर्लभमभूरिशुभैः ॥ ११.२२ ॥

न भवंति यत्र मृतिजन्मजराः त्रिविधं भयं किमुत दुःखगणः ।
अपरं च किंचिदशुभं न भवेत् न गुणादि तत्प्रभवमूलमपि ॥ ११.२३ ॥

अनुभूयते सुखमनंतसखैः सकलैरलंमतिपदं सततम् ।
अपि तारतम्यसहितैः स्वगुरुप्रवणैः परस्परमुरुप्रणयैः ॥ ११.२४ ॥

अतिसुंदराः सुरभयः पुरुषाः हरिचंदनेन नवचंद्ररुचा ।
चलचारुचामरधरानुचरा विचरंति नित्यतरुणा इह ते ॥ ११.२५ ॥

सविलासलास्यपरितुष्टदृशो मृदुगीतवाद्यमुदितश्रवणाः ।
अनुरंजयंति नवकंजदृशो रमणा अमी स्वरमणीस्तरुणीः ॥ ११.२६ ॥

परिणायकानुपवनाभिमुखान् अनु निस्सरंति हरिणीनयनाः ।
विमलाद् विमानवलयाच्छनकैः शशिमंडलादिव रुचो रुचिराः ॥ ११.२७ ॥

अरुणाश्मवर्णतनवस्तनवः शुभहारसन्निभरुचोऽप्यपराः ।
हरिनीलनीलरुचयोऽत्रपराः प्रकटीभवंति विविधाभरणाः ॥ ११.२८ ॥

सुचिरद्युतीर्दधति सूक्ष्मतरं स्वयमंबरं च खलु बिभ्रति याः ।
शुकनिःस्वना ध्रुवमिमा अपराः सुपयोधरा जलधरावलयः ॥ ११.२९ ॥

समतीतविद्रुमभुवां सुदृशां पदपल्लवाग्र्यनखरक्तरुचीः ।
परभागतः स्फटिककुट्टिमभूः प्रकटीकरोति न पुरा प्रकटाः ॥ ११.३० ॥

हरिणीदृशां निवसनानि बृहत्सुनितंबबिंबरुचिरोरुरुचा ।
शबळद्युतीनि मदनस्य जगज्जयवैजयंत्य इति निश्चिनुमः ॥ ११.३१ ॥

करपल्लवैस्तरळितैर्ललितैः असकृत् क्वणत्कनककंकणकैः ।
नवरोमराजिवलिवल्गुमृदुप्रतनूदरैरतिमनाक् तरळैः ॥ ११.३२ ॥

कुचकुंभपूर्णतरकांतिसुधारसशेषबिंदुविसरच्छविभिः ।
वरहारराजिभिरुतानुपदं परिलोठिताभिरशनैरुरसि ॥ ११.३३ ॥

अपि लीलया कुवलयोल्लसितैः अपरैः करैः सहचरीनिहितैः ।
वदनैः शुचिस्मितकटाक्षरसैः चलकुंडलोल्लसितगंडयुगैः ॥ ११.३४ ॥

प्रगतासु तासु रणितै रशनामणिनूपुरैरिव पुरा गदिताः ।
अनुवीक्षितुं तनुविलासमिमं तरुणा भवंत्यथ निवृत्तमुखाः ॥ ११.३५ ॥

अनुपालिताः स्वदयितैर्दयिताः कथमप्युपेत्य कुचभारनताः ।
शनकैः पुनस्तदवलंबबलात् किल ता विशंति परमोपवनम् ॥ ११.३६ ॥

हसितप्रसूननिकरोरुभरप्रणमत्सुवर्णमणिसर्वतरून् ।
उपगूहयन्नमृतसिंधुसखः पवनो न कस्य सुखमेधयति ॥ ११.३७ ॥

वरपारिभद्रकसुकल्पतरुव्रजपारिजातहरिचंदनवत् ।
सहितं समादिपदताननगैः परिभूषयंति तदहो ऋतवः ॥ ११.३८ ॥

स्मितमाधवीकुसुमरम्यतरौ नवचंपकादिकुसुमोल्लसितौ ।
मधुमाधवौ मधुपगीर्मधुरौ मधुजित्प्रियान् प्रमदमानयतः ॥ ११.३९ ॥

नवमल्लिकास्रजमभीष्टतमः शुचिसंभवां प्रणयिनीशिरसि ।
कलयन् स्वयं न कुशलेति किल प्रतिघट्टयत्युरुकुचावुरसा ॥ ११.४० ॥

मधुरस्वरास्ततपतत्रततिप्रकटांतपंक्तिधृतनेत्ररुचः ।
शिखिनोऽनुयांति हि सहस्रदृशं जलदर्तु लक्ष्मनिजनृत्तमहे ॥ ११.४१ ॥

शरदोल्लसत्कुवलयेक्षणया विकचारविंदरुचिराननया ।
प्रियया च शोभनशुकस्वनया रमते जनो मुखर हंसकया ॥ ११.४२ ॥

अभिनंदयन् हिमऋतुं सुसखा स्फटिकाचलच्छलहिमाधिकृतम् ।
फलिनीकुलं कुसुमयन् शिशिरो हसतीव फुल्लनवकुंदरुचा ॥ ११.४३ ॥

हिमशीतवर्षपरितापपुरस्सरदोषमूलमिह नर्तुगुणः ।
प्रियमेव साधयति नित्यमहो स विमुक्तिमानिति विमुक्तिमताम् ॥ ११.४४ ॥

अमृतस्रगुत्तमफलप्रसवान् अमृताय तत्र जनताऽर्पयति ।
उपभोक्तुमप्यविधिबंधवशा प्रकृतिं प्रयाति सकलोऽपि सदा ॥ ११.४५ ॥

प्रमदातिरेकमुपयातवता प्रमदागणेन चरतोपवने ।
उपगीयते स्म मधुरं मधुजिच्चरितं सकांततितिना सततम् ॥ ११.४६ ॥

ललना ललंत्यभिवरं प्रवरा लळिता लुनंति कुसुमानि पराः ।
इतराः स्रजो विरचयंति पतीन् अनुरंजयंति न हि काश्चन नो ॥ ११.४७ ॥

वनलीलया विविधया मुदिताः तरुणा घनस्तननतास्तरुणीः ।
सुलतालयेषु परिरभ्य रतिं वदनारविंदमधुपा दधति ॥ ११.४८ ॥

रसिकाः सुधाप्सु सरसीषु ततो रुतनूपुरानुकृतसारसिकाः ।
विहरंति साकमवगाह्य धवैः जलमड्डुकोत्सवहसद्वदनाः ॥ ११.४९ ॥

विविधा विधाय विहृतीः सलिले विकटेषु विद्रुमतटेषु गताः ।
सुरभिं सुवर्णमथ वर्णकमाददते सखीकरगतं महिळाः ॥ ११.५० ॥

जघनांशुकैरवयवाभरणैः कुचकुंकुमैश्च कचमाल्यवरैः ।
नयनांजनैरपि मिथोब्जदृशां घटितैरलंकृतिरलं क्रियते ॥ ११.५१ ॥

तनुमध्यमा निजगृहाणि गताः सममात्मनामसुसमैरसमैः ।
अमृतं पिबंत्यसुलभं भविभिः चषकैर्महारजतरत्नमयैः ॥ ११.५२ ॥

मृदुकम्रशय्यमनुरागवतां मणिमंचमंचितदृशोऽवसरे ।
अपि चोदिता अधिरुहंति शनैः विनयो हि भूषयति सर्वरसम् ॥ ११.५३ ॥

अभिकांतमुन्नमितकांतकुचा किल बध्नती सकुसुमां कबरीम् ।
सुमुखी सुलक्ष्यभुजमूलवलिः परिरभ्यते प्रणयिनाऽतिरसात्  ॥ ११.५४ ॥

पृथुवृत्ततुंगकठिनोरसिजद्वयवारितायतनिजांतरयोः ।
भुजयोर्युगेन रमणो रमणीं परिरभ्य कोऽत्र रमयेन्न सुखी ॥ ११.५५ ॥

स्मितफुल्लमुल्लसितझिल्लिलसन्मणिकुंडलं मृदुकटाक्षपटु ।
निभृतो निरीक्ष्य सुचिरं सुतनोः प्रतिचुंबति प्रियतमो वदनम् ॥ ११.५६ ॥

नतमुन्नमय्य मुखचंद्रमसं परिरंभसंभृतमुदा सुदृशः ।
उपरम्यते न तरुणेन चिरं मधुराधरामृतरसं पिबता  ॥ ११.५७ ॥

रभसावपातितपृथूरसिजः परिरभ्य तत्क्षणवियाततरः ।
मणितादिसौरतवितानपटू रमयत्यमून् युवतिसंघ उत ॥ ११.५८ ॥

अतिलौकिकान् रमयतो रमणान् रमयंत्यलौकिकगुणा ललनाः ।
अनुरूपरूपमतिलोकसुखं तदलौकिकं निधुवनं लसति ॥ ११.५९ ॥

न रतिः श्रमादिखचिता नियमाद् विरहव्यथाऽपि न वधूवरयोः ।
प्रतिकामिनीप्रणयतः कलहो न समस्ति दोषरहिते हि पदे  ॥ ११.६० ॥

सुखसंविदात्मकतया वपुषां सुरभित्वमेव बहिरंतरपि ।
हरिधाम्नि दंपतिगणस्य ततो ननु मान्यतेऽपि मुनिभिः सुरतम् ॥ ११.६१ ॥

शृणुताप्यलोकविषयं विषयं सकलस्य मुक्तनिकरस्य दृशाम् ।
वपुरिंदिरापतिरमंदरसं ननु सुंदरं प्रकटयत्यनिशम् ॥ ११.६२ ॥

मणिराजिराजित महामकुटं शितिकांतकुंतळसहस्रतयम् ।
अळिकार्धचंद्रविलसत्तिलकं श्रवणोल्लसन्मकरकुंडलयुक् ॥ ११.६३ ॥

परिपूर्णचंद्रपरिहासिमुखं जलजायताक्षमरुणोष्ठपुटम् ।
हसितावलोकललितैरतुलैः अभिनंदयत् प्रणतमात्मजनम् ॥ ११.६४ ॥

नवकंबुकंठमहिमांशुमहो महिमोपलेंद्रवरहारधरम् ।
रमणीयरत्नगणविद्धलसद्वलयांगुलीयकवरांगदवत् ॥ ११.६५ ॥

रविचक्ररुक्प्रकरचक्रकरं विधुबिंबकंबु मधुरांबुरुहम् ।
ज्वलनज्वलद्गदमुदारधनुः पृथुवृत्तहस्तमतिताम्रतळम् ॥ ११.६६ ॥

वरपीवरांसमधिराजदुरोमणिमंटपाग्र्यविलसत्कमलम् ।
सजगद्द्विसप्तकतनूदरकं शुभनाभिकंजगतकाळिनुतम् ॥ ११.६७ ॥

अतिकांतकांचिपदकांचिमिलत्तपनीयभंगरुचिपिंगपटम् ।
वरहस्तिहस्तसदृशोरुयुगं क्रमवृत्तचारुतरजंघमुत ॥ ११.६८ ॥

वरनूपुरं परमरुक्प्रपदं नवविद्रुमद्युतिनखावलिमत् ।
अरिवारिजध्वजकळंकलसत्पदपांसुपावितजगत्त्रितयम् ॥ ११.६९ ॥

निखिलागमावगमितैरमितैः सुखसंविदादिभिरनंतगुणैः ।
प्रपदादिकांतसकलावयवाकृतिभिः सदैक्यवददोषलवम् ॥ ११.७० ॥

अधिकारिणां गुणविशेषवषाद् द्विपदाद्यनंतचरणांततया ।
अतिभासितं घनगुणापघनैः इतरैष्च तत्तदुचितै रुचितैः ॥ ११.७१ ॥

नवभानुभाः कनककांतिपरं वरहारहारि हरिनीलहरित् ।
शबळप्रभादिविविधद्युतिमत् सुखबोधसौरभसुरूपगुणम् ॥ ११.७४ ॥

आष्चर्यरत्नेश् वधिकं जगत्त्रयेप्याष्चर्यमाष्चर्यमहो मुहुर्मुहुः ।
सौंदर्यसारैकरसं रमापतेः रूपं तदानंदयतीह मोक्षिणः ॥ ११.७३ ॥

इज्यते यज्ञशीलैः स यज्ञः प्राज्ञमध्ये परः प्रोच्यतेऽन्यैः ।
गीयते गेयकीर्तिः सुगीतैः विध्यबद्धैः सदाऽऽनंदसांद्रैः ॥ ११.७४ ॥

वैकुंठे ते श्रीविशेषा जनानामत्याश्चर्यं चित्तवाचामभूमिः ।
वैकुंठेते श्रीविशेषाजनानामुक्तश्लाघ्ये युक्तमेतादृशत्वम् ॥ ११.७५ ॥

यंयं सुखी कामयतेऽर्थमत्र संकल्पमात्रात् सकलोऽपि स स्यात् ।
इत्येव वेदा अपि वेदयंति मुक्तिं ततः को विभवातिरेकः ॥ ११.७६ ॥

महानंदतीर्थस्य ये भाष्यभावं मनोवाग्भिरावर्तयंते स्वशक्त्या ।
सुराद्या नरांता मुकुंदप्रसादाद् इमं मोक्षमेते भजंते सदेति ॥ ११.७७ ॥

**॥ इति श्रीमत्कविकुलतिलक त्रिविक्रमपंडिताचार्यसुत**
**श्रीनारायणपंडिताचार्यविरचिते श्रीमत्सुमध्वविजये**
**महाकाव्ये आनंदांकिते एकादशः सर्गः ॥**

## १२. द्वादशः सर्गः

अत्रानंतस्वांतवेदांतिसिंहे मुख्यव्याख्यानिस्वने जृंभमाणे ।
सद्यो माद्यद्वादिदंतींद्रभीमे भेजे क्षोभो मायिगोमायुयूथैः ॥ १२.१ ॥

संभूयामी चोळजद्वीपिपुर्योः पार्श्वे पापा मंत्रयामासुरुग्राः ।
सासूया भूभूषणे वायुदेवे मूढा यद्वद् धार्तराष्ट्रांतिके प्राक् ॥ १२.२ ॥

सन्मात्सर्यं बद्धुमूचेऽशुभानां वाचाऽलोलं कोपि गां धारकस्य ।
मध्ये तेषां नीचनीत्या समानो वाचालोऽलं कोऽपि गांधारकस्य ॥ १२.३ ॥

ऐकं तत्वं वष्टि मायामयीयं वाक्यैः प्राच्यैरप्यवाच्यं विधत्ते ।
पूर्वाऽपूर्वा हंत दौर्घत्यभूषा चित्रंचित्रं दर्शनाचार्यनीतिः ॥ १२.४ ॥

मर्त्यामर्त्यामर्त्यविद्विट्पुरोगं विश्वं दृश्यं विप्रचंडालपूर्वम् ।
भेदापेतं भेदिमानैः समानैः साधीयः कः साधयेत् तामलब्ध्वा ॥ १२.५ ॥

सत्यं सत्यं व्यावहार्यं विधत्ते सर्वं मोहे सर्वनिर्वाहिणी सा ।
ज्ञाने जाते दग्धवस्त्रप्रतीतं पक्वे तस्मिंस्तप्तलोहात्तवार्वत् ॥ १२.६ ॥

ज्ञानिश्रेष्ठश्रेष्ठ विज्ञानिवर्गे नैर्गुण्यस्थे सांप्रतं नाथभूताः ।
आक्रंदं मे हंत शृण्वंतु सोऽयं हाहा मायावाद उत्सादमेति ॥ १२.७ ॥

भ्रष्टा भाट्टा न प्रभाकृत्प्रभाऽभूत् त्रस्ता माहायानिकाद्याश्च यत्र ।
दुर्गं मायावादसत्रं दिधक्षुः नोपेक्ष्या नस्तत्त्ववादाग्निजिह्वा ॥ १२.८ ॥

यं यं प्रापद् भूरिचित्तः प्रदेशं तस्मात्तस्मादागतेरंतरायः ।
प्रत्यज्ञायि व्यक्तमार्येण सोऽपि प्राप्नोत् पार्श्वं हि वयं भाग्यहीनाः ॥ १२.९ ॥

प्रश्नः पृष्टः खंड्यते तेन नूनं युक्तां युक्तिं वक्ति चासावखंड्याम् ।
वादिव्रातं लज्जयेन्नो विशेषाद् आक्षेप्तेति श्रूयते किं नु कुर्मः ॥ १२.१० ॥

प्राच्यं शास्त्रं यत् सपादं तु लक्षं वाक्येनैकेनाक्षिपद्धर्ष तीर्थः ।
इत्थं पांथैर्वर्णीतं शृण्वतः प्राग् युष्मान् प्रापद् दूयमानं मनो मे ॥ १२.११ ॥

वेदव्यासो न्वेष वेदो नु मूर्तो दिव्या मूर्तिर्यस्य सा सुस्मितस्य ।
तद्द्रश्टॄणां चेति वाणी कृपाणी नूनं मायापक्षमूलं छिनत्ति ॥ १२.१२ ॥

अक्लिष्टं तत्सूत्रभाष्यं बलीयो मानोपेतं का क्षतिर्नस्तथा चेत् ।
आस्माकाः केऽप्येवमुक्त्वा विलज्जाः लज्जासिंधौ दुस्सहेऽमज्जयन्नः ॥ १२.१३ ॥

तस्य व्याप्तैः शिष्यजालैस्तु गौणैः संसत्सिंधौ शंखचक्रादिभृद्भिः ।
मा गृह्येरन् विश्वसत्त्वांतराणि क्षेमाप्त्यै नस्तत्र नीतिं विधत्त ॥ १२.१४ ॥

गौणैस्तर्कैर्गौणवाक्याभिगुप्तैः गौणीं बुद्धिं वर्धयंते नृणां ते ।
हंसानां नो वाग्विघातप्रवीणाः सिंधुं भूयोवारिवर्षैरिवाब्दाः ॥ १२.१५ ॥

बाहुल्येन ह्येतदुक्त्वा खलु द्राग् एते विश्वं प्राप्नुवंति प्रकामम् ।
अस्मिन्नस्मद्दर्शनापायकाले यद्वल्लोकापायकाले लयापः ॥ १२.१६ ॥

आकर्ण्येत्थं तस्य वाणीमथान्यो मानी तेषां मानिनां चित्तवेत्ता ।
स्वानां चेतो नंदयन् मंदचेताः धृष्टामुच्चैर्वाचमाचष्ट कष्टः ॥ १२.१७ ॥

तेजः शंकामात्रतो यद् विलीनं धिग् भीरूणां मानसं मानहीनम् ।
एकांतेन प्राप्ततेजोविलीनं स्थेयो यस्माद् भाति हैयंगवीनम् ॥ १२.१८ ॥

येषां विद्यां शांकरी शंकरी नो देवादीनां बाध्यतां साधयंती ।
शौक्रीवालं लज्जयेद् देवपूज्यं तेषामेषां सन्निधौ को विषादः ॥ १२.१९ ॥

यद्यद्वैतं कर्कशैर्गौणतर्कैः रुद्धं साध्यं नैव भात्यस्तु तावत् ।
षट्कर्मज्ञैर्दिव्यमंत्रौषधाढ्यैः एतैर्गुप्तान् नो विजेता हि कश्चित्  ॥ १२.२० ॥

यद्यप्येवं न ह्युपेक्ष्यो विपक्षः किंतु प्राप्तो नाधुनाऽऽक्रंदकालः ।
अप्यद्वंद्वस्वात्मबोधप्रतीतैः आचार्यैर्यच्छंक्यते शंकराद्यैः ॥ १२.२१ ॥

पारंपर्येणाऽगतं तत्त्वशास्त्रं हंतोत्सन्नं नूतनेनेत्युदीर्य ।
तेषां दोषा वर्णनीया विदग्धैः संतोऽसंतो वाऽपि मध्यस्थलोके ॥ १२.२२ ॥

स्वाभिप्रायो ब्रह्मवत् स्यादवाच्यो मायाशक्त्या सर्वनिर्वाहसिद्धिः ।
इत्थं नीत्या शास्त्रनीत्येव बाध्यः सर्वो लोकः स्वात्मनो यः परः स्यात् ॥ १२.२३ ॥

ग्रामेग्रामे वार्यतां माननैषां पूर्वंपूर्वं सामपूर्वैरुपायैः ।
संप्राप्तानां मानभंगाय कार्यं ग्रंथाकर्षाद्युद्यतैरस्मदीयैः  ॥ १२.२४ ॥

इत्याद्येते कार्यमालोच्य काले
चक्रुर्वक्राश्चक्रिभक्तप्रतीपम् ।
योग्या मंक्तुं तेऽन्यथा स्युः कथं वा
दुःखोग्रांभस्यंधतामिस्रसिंधौ ॥ १२.२५ ॥

व्रत्याकारंवासुदेवद्विषं ते प्राज्ञं मन्यं पुंडरीकाभिधानम् ।
वादव्याजाक्षेपकामाः कुमंत्रात् चक्रुर्यत्तं रूप्यपीठालयेऽमी ॥ १२.२६ ॥

यद्वत् सिंहं ग्रामसिंहोऽशुचीच्छो हंसं काको यद्वदेवैकदृष्टिः ।
यद्वन्मायी भूरिमायस्तरक्षुं तद्वद् विद्वद्वर्यमाह्वास्त मूढः ॥ १२.२७ ॥

अप्यल्पोऽसौ न ह्युपेक्षांबभूवे लोलात्मेवादक्षपक्षः पतंगः ।
मध्वेनाहो दुस्तरेण स्वभावात् तेजोराजीराजितेनाग्निनेव ॥ १२.२८ ॥

मानैर्मान्यैर्भासमानोऽसमानैः आक्षिप्यैनं स्वं मतं साधयित्वा ।
प्रीत्यै विष्णोरुत्तमप्रीतितीर्थो वेदव्याख्यां वेदवेदी चकार ॥ १२.२९ ॥

आम्नायं ये पेठुराम्नायपूर्वं प्राप्ता विप्रास्तत्र कौतूहलेन ।
पर्यासीनास्तावदाचार्यवर्यं प्रेक्ष्यं प्रेक्षांचक्रिरेऽनेकसंख्याः ।१२.३० ॥

उक्तांगेभ्यः कादिकान् व्यंजयंतं तत्तन्मात्राव्यंजनादौ प्रवीणम् ।
तिस्रोऽवस्थास्तद्गुणैर्भावयंतं देवा दृष्ट्वा ह्यस्मरन् देवदेवम् ॥ १२.३१ ॥

आदौ ह्रस्वत्वेन वत्सानुसृत्यां मात्रापादौ वर्तयन् दृश्यमानः ।
कुर्वन्नन्याश्चाग्र्यरूपा विवृत्तीः गोविंदश्रीरास गोविंदभक्तः ॥ १२.३२ ॥

मांगल्यांगव्यक्तभावा त्रिलोकीं रंगारूढा विस्मयं प्रापयंती ।
कृष्णेवान्या मान्यविन्यासपादा रेजे माध्वी सुस्वरा वेदवाणी ॥ १२.३३ ॥

गांभीर्याद्यैर्युक्तमौदार्यकार्यैः
नानानादश्लाघ्यमुच्चारणं तत् ।
शीक्षाशिक्षालक्षणानां हि लक्ष्यं
मान्यं मन्ये धन्यबुद्धेरतुल्यम् ॥ १२.३४ ॥

काल्पीः क्ल्‌ प्तीर्व्यंजयन्‌ छांदसीश्च व्यक्तं शाब्दं शास्त्रमुद्भाव्य भूयः ।
स व्याचख्यावुक्तनैरुक्तमार्गो ज्यायान्‌ ज्योतिर्वेदिनां वेदमित्थम्‌ ॥ १२.३५ ॥

श्रौते व्याख्योच्चारणे चारुणी ते मादृग्देही वर्णयेदस्य को नु ।
वागीशानैर्वाग्विहंगेंद्रजीवैः भूर्याश्चर्यैर्वर्णिते ये प्रणम्य ॥ १२.३६ ॥

छंदस्सार्थं सार्थमत्रामुनेत्थं प्रोक्तं श्रुत्वा ब्राह्मणा ब्रह्मणेव ।
सर्वे सौम्या जिष्णुजिज्ञासयाऽमी प्राप्य प्रोचुश्चित्रकायाभिधानम्‌ ॥ १२.३७ ॥

प्राज्यप्रज्ञः प्राज्यया प्रज्ञयाऽसौ हंतावोचन्मंत्रवर्णाभिधेयम्‌ ।
तत्प्रत्यर्थी प्रार्थ्यते वक्तुमेतत्‌ प्राज्ञास्माभिः श्रोतुकामैर्भवांश्च ॥ १२.३८ ॥

इत्युक्तस्तैरेष विस्तारिबुद्धेः प्राप्तुं साम्यं संप्रवृत्तो दुरात्मा ।
हास्योऽत्राभूद्‌ वासुदेवप्रभार्थी यद्वत्‌ पूर्वं पौंड्रको वासुदेवः ॥ १२.३९ ॥

आङादेशादुत्तरं रादिशब्दं श्रुत्वा नारेत्युक्तवंतं पदं तम्‌ ।
व्याख्यालौल्यादैतरेयादिसूक्ते पृथ्वीदेवा निंदनीयं निनिंदुः ॥ १२.४० ॥

शार्दूलाख्यां प्राप्य संभावितः प्राग्‌ लोके धूर्तो मायिगोमायुरेषः ।
वादिद्वीपिध्वंसिनं मध्वसिंहं प्राप्तो हीत्थं शब्दशेषो बभूव ॥ १२.४१ ॥

कृष्णाभीष्टा शास्त्रविस्पष्ट संज्ञा या स्वीया श्रीः पालिता सद्द्विजेन ।
पद्माख्यासत्सैंधवेनाऽहृतां तां शुश्रावाग्र्यानंदतीर्थाख्यपार्थः ॥ १२.४२ ॥

तूर्णं तीर्णादभ्रमार्गोऽथ सार्यः संप्राप्तोऽसौ गोगणैर्भीषयित्वा ।
संयम्यांतर्यंतृकामेन हास्यं संप्राप्तश्रीर्निर्जितं तं जहास ॥ १२.४३ ॥

दुष्टात्माऽसौ भद्रमेकाकिनं यः क्षेप्तुं हेतुः सौख्यदाख्यं बभूव ।
हर्यंशोऽयं तं न चक्षाम भूयः तोके सन्ने सूकरं केसरीव ॥ १२.४४ ॥

तस्य त्रासात् पृष्ठतस्तिष्ठतोऽभूत् क्षेमापेक्षी यो जनः प्राग् जितोऽपि ।
मध्येऽन्येषां गोततीस्तत्प्रयुक्ताः सोऽद्यज्जिष्णुः पंचषैर्गोविशेषैः ॥ १२.४५ ॥

विष्णोर्भूयः शोभयद्भिः पदांतं पारंपर्येणेर्यमाणैरवार्यैः ।
गोव्रातैस्तं दारयित्वा न्यगृह्णात् कंजाख्यानं सिंधुपं मध्वपार्थः ॥ १२.४६ ॥

आस्तामास्तामेष वो विश्वमोषो रेरे मायावादिचोरा द्रवेत ।
द्रष्टाद्रष्टा निग्रहीता ध्रुवं वः प्राप्तः कालो द्राग् गुहांतं प्रवेष्टुम् ॥ १२.४७ ॥

तेजो विद्वच्चक्रचंद्रस्य लीनं विध्वस्ताऽलं वादिनक्षत्रलक्ष्मीः ।
विश्वव्याप्तं यत् तु तद्दीप्तिमूलं युष्मत्प्रेष्ठं तन्निरस्तं तमश्च ॥ १२.४८ ॥

पूर्वाशामापूर्य विश्वप्रकाशी गोसंदोहैः सप्तविद्याख्यवाहः ।
युष्माभिः किं नैक्षि देदीप्यतेऽसौ देवः साक्षात् सर्ववित्सर्वदीपः ॥ १२.४९ ॥

सर्वाधारं ब्रह्मसंज्ञं विहायो रम्याकारं शारदेंदीवराभम् ।
सन्निर्णीतं गुण्यलं शब्दभेदैः मध्वादित्यं संश्रितं कोऽपिधत्ते ॥ १२.५० ॥

विधावतविधावत त्वरितमत्रिवादासुरा–
अदभ्रधिषणाभिधो नरहरिर्हि जाज्वल्यते ।
स युक्तिनखरैः खरैर्मुखरमूर्खदुःखांकुरैः
विदारयति दारुणप्रवचनप्रणादोऽप्रियान् ॥ १२.५१ ॥

धत्ते रूपाण्यनंतान्यपि भुवनपते र्यो हृदाऽप्येक पक्षो दक्षः
सद्भ्योऽखिलेभ्योऽप्यमृतमिह ददौ केवलं यो न मात्रे ।
पक्षिश्रेष्ठोऽपरः सन्नमितमतिपदोऽसंपदे स्यादयं वो मा
दर्पं मायिसर्पा भजतभजत तास्ता गुहा द्राग् द्विजिह्वाः ॥ १२.५२ ॥

वेदव्रातसुदर्शनः परिलसत्तर्काख्यशंखध्वनिः
विभ्राजिष्णुपुराण संहतिगदः श्लोकौघशार्ङ्गान्वितः ।
सत्सूत्रेष्वितिहासनंदकचणो मध्वाख्यनारायणः
प्राप्तो वो निजिघृक्षया द्रवत हे मायाविदेवद्विषः ॥ १२.५३ ॥

इति निगदति मायावादिविद्वेष वेषे
शुभजननिकरे स्वारामतोऽस्मात् प्रयातः।
न्यवसदमरधिष्ण्ये प्राग्रवाटाभिधाने
गुरुमतिरभिनंदन् देवमानंदमूर्तिम् ॥ १२.५४ ॥

**॥ इति श्रीमत्कविकुलतिलक त्रिविक्रमपंडिताचार्यसुत श्रीनारायणपंडिताचार्यविरचिते श्रीमत्सुमध्वविजये महाकाव्ये आनंदांकिते द्वादशः सर्गः ॥**

## १३. त्रयोदषः सर्गः

पृथुदर्शनमुत्थितं कृतार्थं पृथिवीभृत्प्रणतिं गृहीतवंतम् ।
निजशिष्यमुदेऽथ सह्यमाप्तं पुरुषः कश्चिदुपाययौ कदाचित् ॥ १३.१ ॥

भगवानिह नः स्वकिंकराणां अचिरेणाऽव्रजतादनुग्रहाय ।
इति कार्यचिकीर्षयाऽऽर्थयत् त्वां नृप इत्यभ्यधितैष तं प्रणम्य ॥ १३.२ ॥

अथ माघवतीमपास्य काष्ठां व्रजता प्रैधिततेजसा प्रतीचीम् ।
परिशोधयता स्वपादसंगात् पृथिवीं प्राज्ञदिवाकरेण रेजे ॥ १३.३ ॥

अशुभानपहाय मायिजुष्टान् अधमाद्रीनिव गोत्रनिम्नगौघैः ।
सुजनैस्तरसाऽभिगम्यमानः परमस्नेहतया क्रमप्रसन्नैः ॥ १३.४ ॥

सुमनःफलशोभिनोऽत्र पुंसो नमयन् गोभिरनोकहानिवोच्चान् ।
अपि भंगमुपानयन्ननम्रान् दृढभावादपरानवार्यवीर्यः ॥ १३.५ ॥

गमनोत्सवविस्मितैर्निषेव्यो विविधैर्जनपदैर्जनैरजस्रम् ।
परिसृत्वरकीर्तिरार्तिमुक्त्यै पुरुषैर्दूरभुवश्च गम्यमानः ॥ १३.६ ॥

अमरैरमरानुगैर्मुनींद्रैः अपरेक्षाविषयैश्च सेव्यमानः ।
हरिपादसरोजसंगसारो भुवने पावनपावनो निकामम् ॥ १३.७ ॥

अयमप्रतिवारणः प्रयाणे परमानंदसुतीर्थसूरिराजः ।
विबभावतिवेलमच्चरूपः सुरसिंधोरिव संततप्रवाह : ॥ १३.८ ॥

समयेन गतोऽमहीयसाऽसौ विषयं स्तंभपदोपसर्जनाख्यम् ।
मदनाधिपतेः सुधाम धाम प्रविवेशाखिललोकवंदनीयम् ॥ १३.९ ॥

क्षणदामिह तावदूषिवांसं विहिताहर्मुखयोग्ययोगमेनम् ।
गमनोद्यमलक्षणैरजानन् गमनायोद्यतमाशु शिष्यसंघाः ॥ १३.१० ॥

पुरतो विसृताः समाधिशुद्ध्यै यतयस्तत्र पटीः कषायवेषाः ।
सहसोदहरन् स्वयोग्यमुद्रायुतदंडादिकधारणोद्यमेन ॥ १३.११ ॥

अवधार्य विशेषकारिशंखप्रकटांकान् सुधिया गतार्द्रभावान् ।
लसिता तुळसीस्रगस्य कंठे हरिनिर्माल्यतयोचिता न्यधायि ॥ १३.१२ ॥

यतधीर्गुरुचक्रिमूर्तिपूर्णं यतनिश्वासवचा विशोध्य पाणी ।
गुणकुंडलमंडितं विमानं गुणबंधं कवचावृतं बभार ॥ १३.१३ ॥

सकमंडलुमंडलावलंबं स्वयमेवालघुपुस्तकादिभारम् ।
युवशिष्यगणो दधे नयत्नात् हि दाक्ष्यस्य गुणोऽपरोऽस्ति ॥ १३.१४ ॥

अतिसंभ्रमतः परिभ्रमंतं भरदामानवलोकिनं चिराय ।
अनुयोगपरं मुहुः प्रमत्तं जहसुर्नूतनशिष्यमत्र केचित् ॥ १३.१५ ॥

अथ तत्क्षणघट्टितोरुघंटाघननादव्यपदेशतः परेण ।
अमितप्रमतिः प्रचोदितोऽसौ इति निर्यत्सु निजेषु निर्जगाम ॥ १३.१६ ॥

धृतमातपवारणं वरेण्यं व्रतिराजं तमुपर्युपर्युदारम् ।
उदयन्मिहिरोपरिष्ठपूर्णद्विजराजश्रियमाययावभूताम् ॥ १३.१७ ॥

भुवनत्रयधारिणं मुकुंदं दधदंतः स दधे गुरुः स्वयं च ।
अपि केनचिदित्यदो न चित्रं ननु स प्राणपतिर्बिभार तं च ॥ १३.१८ ॥

यतयो गृहिणोऽथ वर्णिमुख्याः श्रुतिगास्त्यक्तनिषिद्धकाम्यभावाः ।
इह मूर्तिधरा इव स्वधर्माः शतसंख्याः शतसंख्यमन्वगच्चन् ॥ १३.१९ ॥

परिवारजना न मार्गदुःखं प्रययुः पूरुषरत्नमीक्षमाणाः ।
इति नाद्भुतमस्य हि प्रयांति स्मृतिमात्राद् भविनो भवापवर्गम् ॥ १३.२० ॥

मदनेश्वरवल्लभप्रदेशे प्रभुमायांतमथाभ्यपद्यत द्राक् ।
जयसिंह इमं नृसिंहवर्यः शुभधीः स्तंभविशिष्टसिंहनामा ॥ १३.२१ ॥

अवतीर्य पुरैव वाहनात् स्वाद् अपि मार्गादपसार्य सैनिकान् सः ।
सह कैश्चन भूसुरैरवाप्तः त्रिजगत्पूज्यपदांतिके ननाम ॥ १३.२२ ॥

पृथिवीपतिनाऽनुगम्यमानो विनयाद् भक्तिरसार्द्रमानसेन ।
अचिरेण स विष्णुमंगलस्य प्रययावायतनोत्तमस्य पार्श्वम् ॥ १३.२३ ॥

नरदेवदिदृक्षया समेता उभयग्रामजना जनाः परे च ।
उपयांतमनंतमानसं तं मुहुरैक्षंत कुतूहलाब्धिमग्नाः ॥ १३.२४ ॥

पुरतो मधुरस्वनैर्वदद्भिः स्वकृताः कर्णसुखा मुकुंदगाथाः ।
धृतपंकजबीजचक्रचिह्नैः कृत नृत्तैश्चतुरैर्निषेव्यमाणम् ॥ १३.२५ ॥

कलितांजलिना स्फुटानुयातं जनसंबाधसहेन भूमिभर्त्रा ।
करुणाविषयं चिकीर्षुणा स्वं व्रजता किंकरतामकैतवेन ॥ १३.२६ ॥

इदमित्थमितीक्षणैर्नराणां अपरिच्छेद्यमहिष्ठधामरूपम् ।
अधिकं धरणीमलं चिकीर्षुं स्फुटमुद्यंतमिव द्युनाथमन्यम् ॥ १३.२७ ॥

अशनैः शनकैरिवाऽव्रजंतं युवसिंहप्रवरप्रगल्भयानम् ।
अतिपाटलपादपल्लवाभ्यां अवनीं पावनतामलं नयंतम् ॥ १३.२८ ॥

नखनिर्जितपद्मरागरागं वरकूर्मप्रपदं निगूढगुल्फम् ।
सुरवर्यकराग्रसेव्यजंघं द्विरदोदारकरोपमोरुयुग्मम् ॥ १३.२९ ॥

शुभशुद्धनितंबबिंबराजन्नवकौशेयविशेषबाह्यवस्त्रम् ।
तनुकुक्षिगळाळिकेषु रेखात्रितयेन प्रकटेन शोभमानम् ॥ १३.३० ॥

मृदुसूक्ष्मघनारुणाविकाच्छप्रकटप्रावरणेन भासमानम् ।
अतिनूतनतिग्मभानुभासां निकरेणेव सुवर्णसानुमंतम् ॥ १३.३१ ॥

पृथुवक्षसमुन्नतांसभित्तिं गुरुवृत्तायतहृद्यबाहुदंडम् ।
परमारुणपाणिपल्लवांतः स्फुरितोर्ध्वध्वजलांछनादिमंतम् ॥ १३.३२ ॥

परिपूर्णशशांकबिंबशंकाविषयं प्राक् सहसाऽवलोकनेन ।
अकळंकतया परं विविक्तं वदनं बिभ्रतमच्छविभ्रमाब्धिम् ॥ १३.३३ ॥

अतिसुंदरमंदहासराजन्नवकुंदाभरदं शुभारुणोष्ठम् ।
कमळायतलोचनावलोकैः अपि लोकान् सकलान् प्रहर्षयंतम् ॥ १३.३४ ॥

अतिभासुरकर्णभासितश्रीतुळसीगुच्छमतुच्छकांतिगंडम् ।
भुवनत्रयभूत्यभूतिदाने चतुरभ्रूवरविभ्रमं सुमौलिम् ॥ १३.३५ ॥

सकलावयवान् स्फुटं मिमानाः प्रतिमालक्षणलक्षणाय लक्ष्यम् ।
चतुरा विदधुर्यदीयगात्रं स सुलक्ष्मेत्यधुना निगद्यते नो ॥ १३.३६ ॥

अतिलोलदृशां समीक्षितुं स्वं जनसंबाधभयेन दूरभाजाम् ।
समदर्शयदूर्ध्वमोरसोऽसौ दययैवोरुजनौघमध्यगोऽपि ॥ १३.३७ ॥

सविकासदृशां कृतांजलीनां जनतानां परमादरान्नतानाम् ।
वलयेन वृतः प्रियं मुरारेः प्रविवेशाऽयतनं प्रबर्हबोधः ॥ १३.३८ ॥

विविधप्रभुमध्यसन्निषण्णो नरदेवेन समं स गूढदेवः ।
विबभावुडुराडिवोडुमध्ये सह मह्यास्तनयेन पूर्णबिंबः ॥ १३.३९ ॥

अवदत् स कथां रथांगपाणेः भगवान् भागवते भवाप हंत्रीम् ।
अनुकूलगुणस्वरादिभाजा निजशिष्यप्रवरेण वाच्यमाने ॥ १३.४० ॥

कथनं तदुदारधैर्यसारं मधुरं पुष्कलभाववत् प्रसन्नम्।
विदुषोऽविदुषोऽपि शृण्वतोऽलं व्यधिताऽनंदरसांबुधौ निमग्नान् ॥ १३.४१ ॥

गमनासनसंकथादिलीलाः स्मृतिमात्रेण भवापवर्गदात्रीः ।
कथमप्यमराः प्रपंचयेयुः ननु मध्वस्य न मादृशोऽल्पबोधाः ॥ १३.४२ ॥

सुतपःकवितादिसद्गुणानां लिकुचानां कुलजोऽगिरोन्वयानाम् ।
अभवद् गुहनामको विपश्चित् कविवर्योऽखिलवादिवंदनीयः ॥ १३.४३ ॥

दयिताऽस्य सती गुणानुरूपा विधिवीर्येण मुहुर्मृतप्रजाऽपि ।
अभजद्भुवनप्रभू हरीशौ सुतकामा वसुदेवसूनुभक्ता ॥ १३.४४ ॥

परमेश्वरयोः प्रसादयोगात् सुतरत्नं तदसूत सूरिपत्नी ।
परिषत्पदपट्टनेषु नार्घो विविदे यस्य समः परीक्षकाग्र्यैः ॥ १३.४५ ॥

वदनेंदुमवेक्ष्य नंदनस्य स्वकुलोत्तारणदक्षलक्षणस्य ।
कृतकृत्यतया क्रियाः प्रकुर्वन् कविराख्यादुचितां त्रिविक्रमाख्याम् ॥ १३.४६ ॥

कळभाषण एव सूरिपोतः कविरासीदनवद्यपद्यवादी ।
अवभाति ननु प्रभाप्रभावी भगवान् बालतरोऽपि तिग्मभानुः ॥ १३.४७ ॥

सकलांगयुतावभातशाखः समये प्राप्त उदारपक्षिसेव्यः ।
स ससर्ज सदध्वगोपकृत्यै लिकुचः काव्यफलं रसाभिरामम् ॥ १३.४८ ॥

प्रतिपादितमात्मना यथार्थं पृथुमायासमयस्य दुर्घटत्वम् ।
स्वगुरौ परिहर्तुमक्षमेऽपि श्रुतवांस्तं स वयस्यबोधितोऽलम् ॥ १३.४९ ॥

भगवत्युदिते सगोविलासे वटुभावं त्यजति त्रिविक्रमाख्ये ।
अपि भानुपुरस्सराः समस्ताः प्रययुः कीटमणिप्रभत्वमाशु ॥ १३.५० ॥

अतिदक्षमतिं सपादलक्षे समये मायिजनस्य युक्तिशूरम् ।
महितं हि महीतळे महिम्ना जनको नंदनमब्रवीदुपांशु ॥ १३.५१ ॥

शृणु वाचमिमां विचारितार्थां न कलौ निर्गुणभावना सुखाय ।
इति गौणविमुक्तये गुणाढ्यं भज देवं वसुदेवसूनुमेव ॥ १३.५२ ॥

इति तातवचो निशम्य किंचित् तरळात्माऽपि विचार्य शास्त्रसारम्।
परमेव स पारमारुरुक्षुः विगुणोऽपास्तिमुपाशृणोत् परेभ्यः ॥ १३.५३ ॥

निजधर्मरतो गृहिप्रबर्हः कलिकालाकुलितांतरोऽपि हंत ।
नितरां निषितात्मना निसर्गात् स्फुटमालोचयदित्यसौ कदाचित् ॥ १३.५४ ॥

रचितं ननु सूत्रमत्र मानं विदुषा सत्यवतीसुतेन साक्षात् ।
अपरस्परसंगतानि भाष्याण्यपि सर्वाणि न मानतां व्रजेयुः ॥ १३.५५ ॥

यदि तेषु निराग्रहांतराः स्मः सुघटं नोपलभामहे हि किंचित् ।
न तथाऽपि परंपरोपयातं न पठामः प्रणयेन शांकरीयम् ॥ १३.५६ ॥

घटनोपनिषत्सु नाल्पबुद्धेः सुघटेत्यभ्युपगम्य चिंतयामः ।
न विमुक्तिमुपैति कोऽपि मुक्त्वा समयोक्तामिह यामिमामुपास्तिम् ॥ १३.५७ ॥

विततः सुखसच्चिदद्वयात्मा समुपास्यॊ विहितो हि तत्त्वविद्भिः ।
स च नावयवी निरूप्यते चेद् द्युतिमात्रं च न हीत्यदो रहस्यम् ॥ १३.५८ ॥

यदि चेदृगुपास्यतेऽस्य रूपं तिमिरत्वेन विभाति पारिशेष्यात् ।
फलमप्यथ मुक्तिरीदृशी स्याद् इति नो नैव धिनोत्युपास्तिरेषा ॥ १३.५९ ॥

अथ वेदपुराणभारतानि स्वयमालोच्य यथावबोधमत्र ।
गुणवंतमुपास्महे मुकुंदं स्मृतिधर्मान् स्फुटमाचरंत एव ।१३.६० ॥

अवधार्य यदेतिकार्यमार्यः स विवेकादुपचक्रमे विधातुम्।
परिपूर्णमतेर्जगत्सु कीर्तिं परिपूर्णामशृणोत् तदा विशुद्धाम् ॥ १३.६१ ॥

विहिनस्ति हि नो जनोऽतिवाग्मी समयं कोऽपि परंपरोपयातम् ।
क्षिप तं त्वमुदारयुक्तिशूरो न परे तत्र समर्थतां व्रजेयुः ॥ १३.६२ ॥

तव वेदनदीर्विगाह्य भूयः समयांभोधिषु कुर्वतो विहारम् ।
नवकाव्यरसप्रियस्य वादिद्विरदेंद्र प्रतिवारणो न जज्ञे ॥ १३.६३ ॥

उपयाहि यशः शशांकगौरं निजयूथस्य भयं निराकुरु त्वम् ।
अधुना विधिनोपपादितं तं प्रतिवादिप्रतिवारणं निवार्य ॥ १३.६४ ॥

इति मायिजनेन तत्रतत्र स्वजनत्वेन स तावदर्थ्यमानः ।
अनुकूलवचा महिष्ठमानो मनसा संशयमाप संशयच्छित् ॥ १३.६५ ॥

शितमध्ववचः सृणिप्रयोक्तॄन् पुरुषानेष विषादयन् कवीभः ।
विविधोत्तरधूळिपातनेन प्रतिघेनाधिकमंधयांचकार ॥ १३.६६ ॥

क्षणदासु विचक्षणः स वीक्ष्य प्रचुरप्रज्ञमनोज्ञशास्त्रसारम् ।
अपराविदितः प्रसादगर्भं विदधे विस्मयमांतरं महांतम् ॥ १३.६७ ॥

विदितवान् व्यवहृत्य सुदर्शनं बहळबोधमवेक्ष्य स निश्चयात् ।
अपि न तस्य मतं सहसाऽऽददे ननु विमृश्य कृती कुरुतेऽखिलम् ॥ १३.६८ ॥

तं विश्णुमंगलगतं बहळप्रबोधं प्राप्याभ्यवंदत तदाऽयुगविक्रमार्यः।
आनंददं स चतुराननहासलक्ष्म्या तत्त्वं प्रवेत्तुममरेंद्र इवाब्जयोनिम् ॥ १३.६९ ॥

**॥ इति श्रीमत्कविकुलतिलक त्रिविक्रमपंडिताचार्यसुत**
**श्रीनारायणपंडिताचार्यविरचिते श्रीमत्सुमध्वविजये**
**महाकाव्ये आनंदांकिते त्रयोदशः सर्गः ॥**

## १४. चतुर्दशः सर्गः

परिवृढघनसंघे राजसिंहोर्जशक्त्या
त्यजति मलिनभावं नीरसत्वान्निकामम् ।
स्फुटमुदयति तेजस्व्युज्ज्वले मध्वभानौ
सुजनजलजकांत्यै विश्वमासीन्मनोज्ञम् ॥ १४.१ ॥

कृतमपकृतमार्यैः क्षम्यतां क्षांतिभूषैः
इति मृदु वदतां च प्रार्थनाभिः प्रभूणाम् ।
अपहृतमपरेषां मंत्रतो ग्रंथजातं
दशहृदयनियोगादग्रहीच्छंकरार्यः ॥ १४.२ ॥

परिवृतमवनम्रैर्ग्रामणीग्राम्यपूर्वैः
अवनतमुरुचेतःपादपार्श्वे नृसिंहम् ।
सहजविजयतोऽयुग्विक्रमार्यः प्रसन्नः
कविकुलतिलकोऽसावाशिषाऽतोषयत्तम् ॥ १४.३ ॥

उपचरति नितांतं हंत पौरंदरी धूः
द्युसदसि भजतो यं दुर्लभा दभ्रभाग्यैः ।
दिशतु स परमाग्र्यानंदतीर्थांघ्रिरेणुः
धरणिधर सुखं ते संततं स्वांतरेति ॥ १४.४ ॥

अनतिपरिचितस्याप्यस्य सोऽयं कवींद्रो
गुणरसमतिगूढं ज्ञातवानित्यचित्रम् ।
मधु मधुकरराजो निष्पतन् पौष्पमाप्तुं
ननु परिचयहीनः काननेऽपि प्रभुः स्यात् ॥ १४.५ ॥

अखिलखलकुलानां वर्धयन् द्वेषदोषं
विदधदपि नराणां कौतुकं मध्यमानाम् ।
स्वगतिसमुचितानां भूतिदायी शुभानां
बहळहृदिह निन्ये शर्वरीः काश्चिदेवम् ॥ १४.६ ॥

उदयति विनताया नंदने श्लाघ्यकाले
स कृतसकलकृत्यः कृत्यवेदिप्रवेकः ।
अरुणयवनिकांतर्ब्रह्म नारायणाख्यं
गुरुगुणमभिदध्यौ योग्ययोगासनस्थः ॥ १४.७ ॥

अतिधवळितदंता दंतकाष्ठैः प्रशस्तैः
अपि युगपदनेके सस्नुरत्र व्रतींद्राः ।
गुरुभिरभिहितेष्वाचारभेदेषु निष्ठां
स्फुटमवगमयंतः सौष्ठवात् कर्मणां च ॥ १४.८ ॥

चरमसमयसुप्ताः पूर्वमुत्थाय शिष्याः
गुरुजनपरिचर्यां चक्रिरे दुष्करां च ।
सबहुमति तदाद्यप्याऽर्धरात्रात् प्रसन्नाः
सुगतिरपरथैषां स्यात् कथंकारमिष्टा ॥ १४.९ ॥

श्रवणमननहेतोः प्राक् चिरायास्तनिद्रः
सपदि विवशयंत्या निद्रया ग्रस्तचेताः ।
स्वयमपि नयति द्रागंगवस्त्रादि पूज्ये
झटिति विगतनिद्रः कोऽपि शिष्योऽन्वशेत ॥ १४.१० ॥

विहितमविहितं प्रागेव कस्माद् विनिद्रैः
इति गुरुपरिवादाशंकया नम्रगात्राः ।
चिरमनवतरंतः श्रावका मुक्तमार्गाः

गुरुषु जलसकाशस्थेषु तूष्णीमतिष्ठन् ॥ १४.११ ॥

विपुलहृदयपार्श्वे दीपदीप्तिप्रदीप्ते
दरवरपरिपूर्णैर्वार्भिरर्घ्यादि दत्वा ।
यतिरतियतचेताश्चक्रिणोऽर्चानिकायात्
कुसुमसमितिमग्र्यामादरादुज्जहार ॥ १४.१२ ॥

अमृतमपि निरीक्ष्याऽस्रावि निर्माल्यसूने
घृतमिदमिति सद्यो भ्रांतिमंतोऽपि शिष्याः ।
श्रदधुरधिकवाक्यैर्विभ्रमास्तच्च पश्चाद्
अनुदिनममृतान्नैस्तस्य सेव्यस्य शक्त्या ॥ १४.१३ ॥

अगमदुचितमंत्रैस्तूदयानां त्रयाणां
कृतिभिरनुमतात्मा तत्र पंचांगविद्भिः ।
उदयमहिमरोचिश्चक्रवर्ती त्रिशक्तिः
दधदतिबृहदंतः षड्गुणं स्वात्मतेजः ॥ १४.१४ ॥

तिमिरनिकरकुंभिव्रातमत्यंततीव्रं
स्थिरतरमखिलानां प्राणिनां रुद्धमार्गम् ।
भुवनभवनपूर्णं भानुमानंजनाभं
हरिरिव नखरैः प्राग् रश्मिजालैर्निरास ॥ १४.१५ ॥

मधुरपतगरावाः शांतनैशांबुबाष्पाः
सपदि विपुलरागः स्वाभिसारात् प्रसन्नाः ।
अरुणतरणिरत्यच्छांबरा दिक्पुरंध्रीः
स्मितसरसिजवक्त्राः स्वैः करैरालिलिंगे ॥ १४.१६ ॥

प्रणतिरभसधूळीबद्धशोभाविशेषा
दधुरुपकृतिमत्तां साधुजालांतराप्ताः ।
समयमुपनतं संवेदयंतो वयस्या
इव दशशतकेतोः केतवः श्रावकाणाम् ॥ १४.१७ ॥

निहितमुचितमुच्चं योगपीठं प्रवक्तुः
परिषदि परितोऽमी सत्वराः सत्त्वभाजः ॥
द्रुतमवसितकृत्यैर्धन्यसंन्यासिवर्गैः
श्रवणपरमकृत्यायोपतस्थुः समेताः ॥ १४.१८ ॥

बभुरमलगुणानां शोभनाच्छादनानां
मुररिपुनिलयानां हंत वैदांतिकीनाम् ।
सपदि सुविवृतानामंतरर्था धियां वा
विविधकवळिकानां संचयाः पत्रिकाणाम् ॥ १४.१९ ॥

अनतिविरळभावा अप्यनन्योन्यसंगाः
ऋजुतरततनानापंक्तिसाम्याप्तशोभाः ।
द्विरदतुरगदेश्या दूरतो वर्जितांताः
कुशललिखितरूपा रेजिरे तेषु वर्णाः ॥ १४.२० ॥

सपदि ददृशुरेके वाचनीयादिभागं
परिचयपटुताभ्यां तावदेके चिरेण ।
हरिगुरुनमनं द्राग् यत्नतोऽमी विधाय
प्रययुरपरसाम्यं सिद्धये स्याद्धि यत्नः ॥ १४.२१ ॥

यतवचसि जनेऽस्मिन्नानते सन्निरस्यन्
सिचययवनिकां तां सांध्यजीमूतरक्ताम् ।

रविरिव रविपूज्यांघ्रिः समाजांतरिक्षे
व्यलसदति शयालुः सन् सहस्रप्रकाशः ॥ १४.२२ ॥

त्रिभुवनवरतेजोव्यक्तवेदार्थशुक्ल
त्रितयरसतया ये वर्णिता वर्णवर्याः ।
पृथुमतिरथ तेषामैक्यमापाद्य सम्यक्
प्रवचनपरिशुद्ध्यै स्म प्रणौति प्रवीणः ॥ १४.२३ ॥

स्वरमचरमकाले मंद्रमेवात्यजद्भिः
स्फुटमुपनिषदंते वाचकैर्वाच्यमाने ।
प्रवचनमतिचित्रं प्राणभाजां श्रुतीनां
अमृतममृतभावस्यैष हेतुं चकार ॥ १४.२४ ॥

धनमिव सधनायेभ्योऽर्कसूनुः प्रसन्नः
शरशतमिव पार्थः संयुगार्थिभ्य उग्रः ।
अरतिविरहितः सोऽनारतं नाऽदिशन्नो
प्रतिवचनमदीनं चोदकेभ्योऽखिलेभ्यः ॥ १४.२५ ॥

अथ दशशतशोचिष्याप्रयाति प्रतीच्यां
प्रवचनमवसाय स्नातुमायात् तटाकम् ।
पृथुमतिरिह तावच्छ्रेष्ठसंसर्गलोलैः
समगमि सपदि स्वर्निम्नगाद्यैश्च तीर्थैः ॥ १४.२६ ॥

घनरसनिकरोऽसावंतरत्यंतशुद्धो
मुनिगण इव भूयः स्नेहवान् प्राग् दधानः ।
प्रतिकृतिमखिलज्ञस्याऽपरोक्ष्येण तावत्
स्फुटमलभत रूपं मज्जने सज्जनेष्टम् ॥ १४.२७ ॥

अपरिमितमनीषस्योल्लसच्छंखबाहोः
रथचरणिशिलानां तन्वतोऽत्राभिषेकम् ।
प्रतितनव उदारास्तास्वलं सन्निधातुः
तनव इव विरेजुः पांचजन्यप्रियस्य ॥ १४.२८ ॥

अभिदधति मुनींद्रा द्वादशाब्दोपवास
प्रतिमफलमलंयत्सेवनं भक्तियुक्तम् ।
अधिकममरनद्याद्याप्लवाद्धन्यमान्याद्
अपिबदलवबोधो विष्णुपादोदकं तत् ॥ १४.२९ ॥

तरणिभिरिव गौरैरूर्ध्वपुंड्रैर्द्विषड्भिः
सदरपरमचक्रोदीर्णतेजा हरीष्टः ।
मुररिपुविमुखानां दुस्सहो देहभाजां
लयसमय इवान्यो मान्यधीराबभासे ॥ १४.३० ॥

समधिकधिषणस्य प्रेक्षमाणो जनौघः
प्रकृतिमधुरमास्यव्याजपूर्णेंदुबिंबम् ।
अमुचदपसरेति श्रावकोक्तेः पुराऽस्मिन्
प्रचलति पदवीं तां प्रांजलिस्तूर्णमारात् ॥ १४.३१ ॥

गुरुचरणसरोजद्वंद्वनिर्णेजनांभो
दधति जननिकाये सर्वमुर्वीगतं च ।
अवनिरनभिनंदिन्यप्यदश्चक्षमेऽसौ
कथमपि कथमेव स्यात् क्षमाख्याऽन्यथाऽस्याः ॥ १४.३२ ॥

अविदितरसभेदं शीतळं लघ्वगंधं
विमलममलपाणिः पाणिजैरप्रविष्टम् ।
वदनपवनभीत्या पार्श्वतो बिभ्रदग्र्यं

कमथ करकपूर्णं संयमीहानिनाय ॥ १४.३३ ॥

विहसितबिसभंगश्रीप्रकर्षं सितिम्ना
जलजममृतपूरैः पूरयामास रम्यम् ।
समयगुणविशेषालोचकैर्लाळनीयः
ससुरभिसुमनोभिः स स्फुटं गौरपक्श् अः ॥ १४.३४ ॥

विमलमलयजांभोबिंदुभिश्चर्चितार्चो
नवललिततुळस्या पुष्पराज्याऽऽर्चिचत् सः
स्थलजजलजवल्लीवृक्षवीरुत्समस्त
प्रसवविजयलक्ष्म्या मूर्तयेवेंदिरेशम् ॥ १४.३५ ॥

स दददधिकबोधः षोडशात्रोपचारान्
व्यरहयदगुणान् द्वात्रिंशदागः पुरोगान् ।
अगणितगुणमुच्चैस्तोषयन् शार्ङ्गपाणिं
षडपि परमभक्त्याऽनूपचारान् दिदेश ॥ १४.३६ ॥

तमरुणमणिवर्णं दिव्यदेहाख्यगेहे
स्नपितमतिपृथुश्रद्धानदीचित्तवार्भिः ।
ननु स यजति नित्यं हृत्सरोजासनस्थं
न तु सकृदिति पुष्पैरष्टभिर्भावपुष्पैः ॥ १४.३७ ॥

कृतपरमसपर्यः सांद्रसच्चंदनांभः
परिमळितभुजोरोमंडलांसो मनीषी ।
स्मितरुचिरमुखेंदुः स्निग्धकौशेयवासाः
स मुनिसुरनराणां चक्षुषामुत्सवोऽभूत् ॥ १४.३८ ॥

परमथ परमान्नं प्राप्तमेवाप्रयासं
प्रभुरिह बुभुजेऽसौ वेदवादप्रवीणः ।
अजितपरमभक्तः संततं मन्यमानः
सकलजगदधीशः प्रीयतां शौरिरित्थम् ॥ १४.३९ ॥

सहचरपरिक्लप्ते सूक्ष्मवस्त्रास्तृतेऽसौ
अवितनुरुहरूपौशीरवर्ये निषण्णः ।
अरमयदिह नानाहृद्यविद्याविलासैः
कविजनपरिवारं मंडयन् मंडपाग्र्यम् ॥ १४.४० ॥

अवसरमधिगम्य भ्रूविजृंभादभीष्टो
मुखसततगलक्ष्मीभूतपाणिप्रवाळः ।
स्मितनयनविकासैस्तस्य विज्ञातभावः
श्रवसि किमपि कार्यं मंत्रयामास मंक्षु ॥ १४.४१ ॥

प्रणतिपरमकृत्याः सन्मतेर्ये जनौघाः
विबभुरनतिदूरे संहतास्तानतीत्य ।
अहमहमिकयाऽऽशु प्राप्य पार्श्वं प्रणेमुः
बहव इह गृहस्थाः पूर्वसेवां विधातुम् ॥ १४.४२ ॥

विविधजनपदस्थाः प्राक् श्रुतेभ्यो गुणेभ्यः
शतगुणगुणमेनं विस्मिता वीक्षमाणाः ।
मुकुळितकरपद्मा आस्यतामित्यवाप्ताः
प्रचुरतरहृदा संभावयांचक्रिरेऽन्ये ॥ १४.४३ ॥

अलमलमनुवादेनानुवाच्येत पश्चात्
ननु गुरव इदानीमुद्यता हि प्रवक्तुम् ।
न मननमधुना द्रागाव्रजेत्याह्वयत् तान्
श्रुतपरिचयसक्तान् श्रावकान् श्रावकाग्र्यः ॥ १४.४४ ॥

अधिकधिषणमेनं व्याख्यया शोभमानं
हरिमिव कविवर्यं सत्यवत्यास्तनूजम् ।
सततमनिमिषं संदृश्य सानंदचित्ताः
समयमपि गतं संविद्रते न स्म लोकाः ॥ १४.४५ ॥

उदयमित इवास्तं यंश्च भानुर्बभासे
स्फुटमकलुशरूपो दर्शनीयोऽनुरागी ।
शुचि हरिपदमापत्संपदोराश्रितानां
न हि भवति विशेषः स्वप्रकाशोन्नतानाम् ॥ १४.४६ ॥

मरतकमणिवर्णे भूतधात्री पुरंध्र्याः
लसति जलधिवासस्यर्धलीनः क्षणार्धम् ।
अरुणतरणिबिंबच्छद्मना पद्मरागः
कपिशकरकलापोल्लास्यभूत् प्रेक्षणीयः ॥ १४.४७ ॥

अवनिवनवनध्रुग्वायुखाहम्महत्सु
प्रकृतिगुणसमेताव्याकृताकाश एकम् ।
ततमतनुमनाः सोऽचिंतयत् सत्समाधौ
असुरसुरनरेभ्यः सद्गुणं नाथमन्यम् ॥ १४.४८ ॥

व्यदधत परिदृष्टज्योतिषः साधु सांध्यं
नियममवनिदेवा ज्योतिषोऽप्यावलोकात् ।
विहितमनुसरंतो धर्मशास्त्रप्रवीणाः
सवितरि सवितारं चिंतयंतस्त्रिलोक्याः ॥ १४.४९ ॥

विविदुरतितरां ये देवताः षोडशोक्ता
हरहरिहयपूर्वांत्याः कलाभेदतोऽस्य ।
सुहुतमतिसृजंतोऽग्न्याहितास्तेऽग्निहोत्रं
व्यधुरुचितमपूर्वं येन गायत्रलोकः ॥ १४.५० ॥

विधुरयमकळंकः स्याद् यदि स्यादवश्यं
ननु निजसहजायाः सुंदरास्येंदुकल्पः ।
इति सुरललनाभिर्लाळितः खेचरीभिः
समधिकमधुरिम्णा पूर्णचंद्रस्तदोदैत् ॥ १४.५१ ॥

इनविरहमसह्यं प्राप्य पद्मैः सचक्रैः
चिरमिह परितप्तं पूर्वतप्तैः सुतुष्टम् ।
मृदुकुमुदचकोरैः पादसंगेन राज्ञः
कमपि सकलहृद्यं कल्पयेन्नैव दैवम् ॥ १४.५२ ॥

दलितेंद्रनीलमणिनीलविभ्रमं
नवकुंदकुड्मळसितद्विजावलि ।
स्मितया नगोत्तमशिरस्सुजातया
वनमालया सुरभिताशयाऽन्वितम् ॥ १४.५३ ॥

मृदुगामिविमानसंपदो
रमयत् सुस्मितगोपसुंदरीः ।
परितापविहीनमुज्ज्वलं
सुततं सूक्ष्मतरांबरं वरम् ॥ १४.५४ ॥

गोभिस्तमांस्यपनयन् गतिदं प्रजानां
अर्थांतरं स भगवान् प्रकटीचकार ।
आनंदचिद्गुणगणं परिपूर्णसंवित्
चंद्रस्तु शब्दगुणमित्ययमेव भेदः ॥ १४.५५ ॥

**॥ इति श्रीमत्कविकुलतिलक त्रिविक्रमपंडिताचार्यसुत**
**श्रीनारायणपंडिताचार्यविरचिते श्रीमत्सुमध्वविजये**
**महाकाव्ये आनंदांकिते चतुर्दशः सर्गः ॥**

## १५. पंचदशः सर्गः

भूयोबोधस्ततो भूयो व्याचख्यौ भाष्यमद्भुतम् ।
ग्रामे ग्रामीणसामान्ये वसंस्तत्रामरालये ॥ १५.१ ॥

परपक्षरथारूढं खरतर्कमहायुधम् ।
त्रिविक्रमार्यं सोऽपश्यत् प्रतिवीरमिवाग्रतः ॥ १५.२ ॥

तदा तदाननांभोजाद् वृत्तोपन्यासभारती ।
सेना सेनाग्रहा दिव्या शिबिरादिव निर्ययौ ॥ १५.३ ॥

नात्यत्वरा नातिरया न स्खलंती निरंतरा ।
अनानावयवेत्येव दवीयोभिः प्रतर्किता ॥ १५.४ ॥

सूत्रस्यंदनवृंदाढ्या दुर्वारश्रुतिवारणा ।
सूपपत्तिमहापत्तिर्विचित्रस्मृतिसप्तिका ॥ १५.५ ॥

वर्धितोर्मिहरिप्रेष्ठासुपयोधरसुस्वरा ।
सवितानप्रकाशार्था सागरी श्रीरिवापरा ॥ १५.६ ॥

पद्मेशपदपद्माश्रित् कृत्यांगं पद्मजन्मनः ।
लाळिता शिरसेशेन गंगेवाशेषपावनी ॥ १५.७ ॥

नारायणोऽनंतगुणो ब्रह्माख्यो वेदवेदितः ।
विश्वकर्तेति विश्वज्ञः श्रुत्या युक्त्याऽप्यसीषधत् ॥ १५.८ ॥

प्रधानमपराधीनं कारणं परिणामि यत् ।
पयोवदिति चेत् साध्यवैकल्यं स्यान्निदर्षने ॥ १५.९ ॥

विवादाध्यासिता सृष्टिश्चेतनेच्चानुसारिणी ।
सृष्टित्वात् पटसृष्टिर्वेत्यनुमा पक्षसाधिका ॥ १५.१० ॥

यच्चेतनाचेतनयोरंगांगित्वादि मन्वते ।
सृष्टावीशानपेक्षायां तन्न शोभनतां व्रजेत् ॥ १५.११ ॥

सर्वविन्निर्मितं सर्वं कदाचित्कत्वहेतुतः ।
न यदेवं नो तदेवं यथाऽत्मेतीश्वरानुमा ॥ १५.१२ ॥

बलाय सर्वानुमानां वेदाः स्युर्यैरपालिताः ।
कामादेताः प्रवर्तंते कामिन्य इव भर्तृभिः ॥ १५.१३ ॥

कारणं परिणामि स्याद् ब्रह्म नो चेतनत्वतः ।
न यदित्थं नो तदित्थं यथा क्षीरपुरस्सरम् ॥ १५.१४ ॥

न विष्वकृत् पशुपतिः श्रूयमाणागुणत्वतः ।
चैत्रवत् किं पुनर्विघ्नब्रध्नाद्या बालशंकिताः ॥ १५.१५ ॥

ननु सौख्यादिमान् नेशो दुःखादिरहितत्वतः ।
यो नैवं स्यात् स नैवं स्याद् यथा संसृतिमानिति ॥ १५.१६ ॥

एवं चेद् विमतो ज्ञानी न भ्रांतिरहितत्वतः ।
यो नैवं स्यात् स नैवं स्याद् भवीवेत्यनुमीयते ॥ १५.१७ ॥

सर्वज्ञस्याज्ञतां वेदः श्रद्धेयो विरुणद्धि चेत् ।
तस्यै वमांदमानंदं वदन्नाश्राव्यसौ कथम् ॥ १५.१८ ॥

दुःखं परिजिहीर्षन् यः सुखं नोरीचिकीर्षति ।
स हंताऽपतितं दुःखमीशस्य व्यस्मरज्जळः ॥ १५.१९ ॥

यो दुःखसमवायोऽयं चैत्रेतेन ह्यभेदवान् ।
समवायः कश्चिदीशे तदनेकत्वमन्यथा ॥ १५.२० ॥

औपाधिकोऽस्य भेदश्चेत् सत्योऽसत्यः स्विदुच्यताम् ।
तद् द्वयं चोक्तदोषं हि मायिवन्मा वदेत् परम् ॥ १५.२१ ॥

ब्रूयुरौपाधिकं भेदं ज्ञानादीनां यदात्मनः ।
नीत्याऽनया तन्निरासात् स्यात् तस्यानंतधर्मता ॥ १५.२२ ॥

गुणादिभेदे संबंधमपेक्ष्याप्यनवस्थितेः ।
विशेषमात्रेणाऽनंत्यं गुणानां शोभते विभोः ॥ १५.२३ ॥

मन्यंते शून्यमेवान्ये तत्वमागमवैरिणः ।
मता माध्यमिकास्तेऽपि व्यक्ताश्छन्ना इति द्वये ॥ १५.२४ ॥

शून्यं ब्रह्माह्वयेनाऽहुः स्वांश्च वेदांतिनोऽभ्यधुः ।
अतत्वावेदकं वेदं वदंतश्चरमे खलाः ॥ १५.२५ ॥

परतत्वविवर्तत्वादपरस्याखिलस्य च ।
अविशेषत्वतश्चास्य नांतरंतरमेतयोः ॥ १५.२६ ॥

अखंडखंडनन्यायानखंडमपि खंडयन् ।
अखंडयदखंडज्ञो द्वयांश्चाखंडलद्विषः ॥ १५.२७ ॥

विमतं कारणं न स्यादसत्वान्न यदीदृशम् ।
नेदृशं तद् यथा कुंभकर्तेत्यत्रानुमीयते ॥ १५.२८ ॥

अंघो तापस नो शून्यं कारणं कुंभकर्तृवत् ।
यत्संवृत्युत्थितं विश्वं तत् कारणमितीर्यते ॥ १५.२९ ॥

एवं चेत् कारणं मा स्म ब्रवीः शून्यं कथंचन ।
आयुष्मंस्तदधिष्ठानं व्युत्पित्सस्व गुरोर्गृहे ॥ १५.३० ॥

विवादस्य पदं न स्यादधिष्ठानमसत्त्वतः ।
वैधर्म्येणैष दृष्टांतः शुक्त्यादिवदितीर्यते ॥ १५.३१ ॥

अतत्त्वावेदकं मानमिति स्वव्याहतं यतः ।
तद्वादी तेन वेदस्य सोऽभिप्रैत्यप्रमाणताम् ॥ १५.३२ ॥

यं तत्त्वावेदकं वेद वेदांशं वेददूषकः ।
तत्वस्यावर्णनीयत्वात् स तत्वावेदकः कथम् ॥ १५.३३ ॥

लक्षणाभिः प्रवर्तंते वाक्यानि तिसृभिर्यदि ।
विषयत्वं लक्षणानां तस्यैवानिष्टमागतम् ॥ १५.३४ ॥

किंचाखंडेऽत्र वाक्यानि किंचिद् विदधते न हि ।
तान्यभ्यधुरभावं चेज्जाड्यादेस्तन्न शोभते ॥ १५.३५ ॥

अभावभावस्याभावाद् भावरूपस्य तस्य तु ।
भावाभावविशेषाणामभावादविशेषिणः ॥ १५.३६ ॥

यो वेदवेदितार्थानां नित्यसंत्यागसंश्रवी ।
वेदबाह्यो विपश्चिद्भिरेष निश्चीयतां ततः ॥ १५.३७ ॥

ज्यायसो दूषणेनैव धूर्तम्मन्योऽपि दूषितः ।
पक्षयोरविशेषत्वादनयोः सद्विपक्षयोः ॥ १५.३८ ॥

असत्वादित्यसौ हेतुरसिद्धो ब्रह्मवादिनः ।
मेति भाण्यविशेषत्वादेतयोर्ब्रह्मशून्ययोः ॥ १५.३९ ॥

सोऽंगीकरोति चेत् सत्त्वं ब्रह्मणः स्याद् विशेषिता ।
न चेत् प्राप्तं पारिशेष्यादसत्त्वं न निरस्यतु ॥ १५.४० ॥

विगीतं न विचार्यं स्यात् न भाव्यं न फलप्रदम् ।
शून्यं ब्रह्माद्यमद्वैतं विधिधीगोचरो न यत् ॥ १५.४१ ॥

खपुष्पवदखंडत्वाद् व्यतिरिक्तं निदर्शनम् ।
प्रमाणादिवदित्येवमूहनीयं यथेप्सितम् ॥ १५.४२ ॥

आम्नायानाममानत्वे धर्मादेरप्रमाणता ।
धर्माद्यभावे नो मानं प्रत्यक्षैकप्रमाणिनः ॥ १५.४३ ॥

न पौरुषेयं वचनं प्रामाण्येन विनिश्चितम् ।
पौरुषेयत्वतो यद्वद् वाक्यमुन्मत्तभाषितम् ॥ १५.४४ ॥

विमतः पुरुषोऽज्ञः स्यात् स्याच्चासौ विप्रलंभकः ।
पुंस्त्वाच्चैत्रवदित्यस्ता सर्वज्ञे केवलानुमा ॥ १५.४५ ॥

दुःखाकरोति यद् दैवं दुःशास्त्रेषूग्र आग्रहः ।
दुःखाकरोऽतिघोरः स्याल्लोकोऽतस्तद्वतां ध्रुवः ॥ १५.४६ ॥

आस्माकेऽपेक्षिते पक्षे मोक्षं दद्यादधोक्षजः ।
यत्र स्वानंदिनः संतः सेवंते विषयान् बहून् ॥ १५.४७ ॥

स्वव्याहत्यादिनोपेक्ष्या मुक्तिर्या निर्विशेषिता ।
कदेत्याद्यनुयोगेऽस्या विशेषः स्यान्ननूत्तरे ॥ १५.४८ ॥

अपि बुद्ध्यादिरहितः पुरुषार्थी न सर्वथा ।
निखिलानुभवाभावात् पुत्तळीकापुरोगवत् ॥ १५.४९ ॥

ज्ञानप्रयत्नवांछावानीशो न ह्यशुभं भजेत् ।
स्वसामर्थ्येन तेनैवं तं च कुर्यात् स तादृशम् ॥ १५.५० ॥

दुःखव्याप्तं सुखं बद्धे दृष्ट्वा मुक्ते निरस्यता ।
स्वरूपं च निरस्येत शून्यवादी तदा भवेत् ॥ १५.५१ ॥

ननु विप्रतिपन्नः स्यादूर्मिमान् देहवत्त्वतः ।
चैत्रो यथेत्युपाधिः स्यात् तत्र चाशुद्धदेहिता ॥ १५.५२ ॥

अनैकांतिकता हेतोर्देहवत्त्वादधीशितुः ।
सोऽदेहश्चेदनिच्छादिर्भवेच्छशविषाणवत् ॥ १५.५३ ॥

ज्ञात्रादिरूपमस्य स्याद् वैलक्षण्याय चेत् ततः ।
तदेव देहशब्दोक्तं न ह्यसौ प्राकृताकृतिः ॥ १५.५४ ॥

एवं स्वरूपदेहत्वं मुक्तस्याप्युररीकृतम् ।
नानिष्टभोगस्तेन स्यात् प्राकृतक्षेत्रसंभवः ॥ १५.५५ ॥

विमतो नावयववान् विनाशित्वप्रसंगतः ।
पटवच्चेदवयवा निरस्यंतेऽत्र कीदृशाः ॥ १५.५६ ॥

सिद्धसाधनता हेतोस्ते भिन्नाश्चेदचिन्मयाः ।
आत्मनो भेदरहिता एष्टव्या एव वादिभिः ॥ १५.५७ ॥

परमाण्वादिदेशेषु व्याप्त्यै व्यामादिकेष्वपि ।
यथाऽऽत्मनः प्रदेशाः स्युस्तेषां नोऽवयवास्तथा ॥ १५.५८ ॥

मुक्तो रूपादिवित् सत्वाज्जडान्यत्वे सतीशवत् ।
दृष्टांतोऽसाध्यविकलस्तस्य सर्वज्ञताग्रहात् ॥ १५.५९ ॥

ईश्वरो न सुखी तेन रूपाद्यनुभवन्नपि ।
दुःखप्रसंगादिति मा वादि तद्व्याप्तिदूषणात् ॥ १५.६० ॥

दृष्टांतो यस्य नेष्टोयं तस्य स्याद् व्यतिरेकवान् ।
शिलावदित्यतः शुद्धचिद्देहेंद्रियभोग्यसौ ॥ १५.६१ ॥

स्वानंदविषये मोक्षे वेदोक्ते युक्तिसाधिते ।
द्वेषोऽयं वादिनां कस्मात् तद्विरुद्धेऽथवाऽऽग्रहः ॥ १५.६२ ॥

ततः स्वतः प्रमाणेन देवो वेदेन वेदितः ।
विष्णुर्मोक्षस्य दातेति विश्वं भवति शोभनम् ॥ १५.६३ ॥

इत्यादीन् दर्शयंत्यर्थान् व्याख्योपन्याससंयुता ।
त्रिविक्रमार्येण तदा विश्वाभिज्ञस्य शुश्रुवे ॥ १५.६४ ॥

अथ प्रायुंक्त विविधान् बोधचापगुणेरितान् ।
विपक्षयुक्तान् वीर्येण तीक्ष्णांस्तर्कशरानसौ ॥ १५.६५ ॥

चिच्छेदातुच्छधिषणस्तांस्तदा तर्कसायकैः ।
प्रयुक्तमात्रान् प्रहसन् लीलयाऽतिशयालुभिः ॥ १५.६६ ॥

अधार्याणीतरजनैरनिवर्त्यानि पूरुषैः ।
विजिगीषुर्द्विजश्रेष्ठो वेदास्त्राणि प्रयुक्तवान् ॥ १५.६७ ॥

वाक्यैरतिबलीयोभिः प्रत्यस्त्रैरिव वैदिकैः ।
अर्थांतरं प्रकटयन् तान्यसौ सन्न्यवर्तयत् ॥ १५.६८ ॥

सप्ताष्टानि दिनान्येवं वादं कृत्वा सहामुना ।
निरुत्तरं च निश्चोद्यं चक्रे चक्रायुधप्रियः ॥ १५.६९ ॥

प्रणम्याऽचष्ट शिष्टोऽसौ क्षम्यतां नाथ चापलम् ।
पदपद्मरजोदास्यं ध्रुवं मे दीयतामिति ॥ १५.७० ॥

व्याख्यां भाष्यस्य भूयोधीः श्रवणं सूरिनंदनः ।
संतः प्रीतिमसंतोऽन्यां सममारेभिरे ततः ॥ १५.७१ ॥

गुर्वाज्ञागौरवाट्टीकां कुर्वन् भाष्यस्य दुष्कराम् ।
षडर्धविक्रमार्योसौ महाचार्यमभाषत ॥ १५.७२ ॥

कवींद्रैर्न समाप्यंते संगृह्यापि यतोऽनिशम् ।
न्यायरत्नानि भाष्याब्धेरस्य गांभीर्यमद्भुतम् ॥ १५.७३ ॥

दशोपनिषदो देवीः देवा इव समीप्सिताः ।
युक्ताः प्रसादयंत्यर्था एषु भाष्यालयेष्वलम् ॥ १५.७४ ॥

गीतातात्पर्यभाष्याभ्यामाभ्यां विश्वं प्रकाश्यते ।
गोगणैरप्रतीकारैरर्केंदुभ्यामिवाधिकम् ॥ १५.७५ ॥

इतिहासपुराणाब्धेर्भवच्चित्ताद्रिलोळितात् ।
जातां भारततात्पर्यसुधां कः सन्न सेवते ॥ १५.७६ ॥

पुराणस्थानपांथानामभाषात्रयवेदिनाम् ।
भवता सुसखा चक्रे श्रीभागवतनिर्णयः ॥ १५.७७ ॥

कस्तंत्रसारं संप्राप्य न स्यात् पर्याप्तवांछितः ।
अमरैराश्रितच्छायं कल्पद्रुममिवोत्तमम् ॥ १५.७८ ॥

लोकानामवलोकाय मार्गस्यास्य व्यधाद् भवान् ।
करुणाकर नेत्राभे वादसन्मानलक्षणे ॥ १५.७९ ॥

ऐकाकी किल यश्चक्रे पदं मौलिषु विद्विषाम् ।
तत्वनिर्णयपार्थोऽयं केन नाम न पूज्यते ॥ १५.८० ॥

वादादयः प्रकरणस्फुलिंगास्तनवोऽप्यलम् ।
विपक्षकक्षं क्षिण्वंति मारुतेन त्वयेरिताः ॥ १५.८१ ॥

अनंतोऽर्थः प्रकटितस्त्वयाऽणौ भाष्यसंग्रहे ।
अहो आत्मपरिज्ञप्त्यै कृष्णेनेवाऽननांतरे ॥ १५.८२ ॥

भगवंश्चित्रकवितां लौकिकीं दर्शयन् किल ।
गोप्यं भारतसंक्षेपमकृथा विश्वविस्मयम् ॥ १५.८३ ॥

नानासुभाषितस्तोत्रगाथादिकृतिसत्कृतीः ।
त्वयि रत्नाकरे रत्नश्रेणीर्वा गणयंति के ॥ १५.८४ ॥

एषु दभ्रमतीन् दभ्रान् हसत्युच्चैः सतां सभा ।
चिंतामणींश्चिंतयंती मितानप्यमितार्थदान् ॥ १५.८५ ॥

अपरोऽपीष्यतेऽस्माभिर्ग्रंथेष्वेतेषु सत्स्वपि ।
सत्स्वपींद्रादिषु पुरा तारकारिरिवामरैः ॥ १५.८६ ॥

ग्रंथेभ्य एभ्योऽगाधेभ्यो युक्तयो नो दुरुद्धराः ।
मनोमांद्यात् ततो ग्रंथं व्यक्ततर्कततिं कुरु ॥ १५.८७ ॥

इत्यर्थितो व्यधान्मध्वः सोऽनुव्याख्यां सतां सुधाम् ।
दुर्वादिगर्वाद्रिपविं मायिध्वांतरविद्युतिम् ॥ १५.८८ ॥

युगपद् रचयन्नेनां कदाचित् स निरंतरम् ।
चतुरश्चतुरः शिष्यान् लीलयाऽलेखयत् खलु ॥ १५.८९ ॥

युक्ताया युक्तिमालायाः प्रोक्तायास्तत्र चाऽत्मना ।
व्यक्तं चक्रे विवरणं कवींद्रैरेष दुष्करम् ॥ १५.९० ॥

मध्वेंदोर्नित्यसंबंधात् निस्तमस्तापचेतसोः ।
वैकुंठं यातयोः पित्रोः गेहेऽस्यावरजोऽवसत्  ॥ १५.९१ ॥

विधिभ्रूविभ्रमभ्रश्यद्धनगोधान्यसंपदा ।
निर्वेदिना वेदविदा तेनाऽपे वेदवादिराट्  ॥ १५.९२ ॥

पारिव्राज्यं प्रार्थयंतं पादानम्रमिमं मुहुः ।
समयापेक्षयोर्वीक्षो गमयामास धाम तम्  ॥ १५.९३ ॥

न जघास न सुष्वाप न जहास स धीरधीः ।
समयार्थी स्मरन् ज्येष्ठं रामं रामानुजो यथा ॥ १५.९४ ॥

राज्ये कथंचित् संस्थाप्य राजानं विरहार्दितम् ।
अवतारभुवं प्रायाद् भगवान् शरदत्यये ॥ १५.९५ ॥

विशुद्धद्विकुलं श्रौतं शुचिं कृतपितृक्रियम् ।
विरक्तं विषयान् भुक्त्वा व्यधान्मध्वोऽनुजं यतिम् ॥ १५.९६ ॥

रहस्यतिरहस्यं तद् ब्रह्म ब्रह्मसमो ददौ ।
अमुष्मै पंचतपसो न विदुर्यत् तपस्विनः ॥ १५.९७ ॥

प्रेमामृतप्रसन्नास्यस्मितांगापांगपूर्वकम् ।
श्रीविष्णुतीर्थनामास्मै प्रीतितीर्थः प्रदत्तवान् ॥ १५.९८ ॥

श्रवणेनानुवादेन मननेनावृथाऽकरोत् ।
कालं वेदांतशास्त्रस्य वेदांतगुरुसोदरः ॥ १५.९९ ॥

स दांतिभक्तिमाधुर्यपरिचर्यादिमेदुरैः ।
महाविटपिनं चक्रे गुरोः स्वस्थं कृपांकुरम् ॥ १५.१०० ॥

अनंतमतिकारुण्यकल्पद्रुमवतो जनैः ।
अवर्ण्यो महिमा तस्य लौल्यात् संवर्ण्यते मनाक् ॥ १५.१०१ ॥

चतुरोऽसौ प्रवचने मनुसंसिद्धिमान् मनः ।
संख्या मां पूरणी मा गान्मध्वदासमिति व्यधात् ॥ १५.१०२ ॥

दिशं प्रयातं शशिनश्चरंतं पर्यशोधयत् ।
तीर्थकं विष्णुतीर्थं च विष्णुतीर्थष्च तीर्थकम् ॥ १५.१०३ ॥

अकामानामनेकेषां सिद्धिभूमिं तपस्विनाम् ।
तिरोहितात्मा प्रापासौ हरिश्चंद्रमहीधरम् ॥ १५.१०४ ॥

द्वंद्वदुःखानले वीरो मात्सर्येण विमत्सरः ।
तत्याज मत्वा तस्यासावशनादींधनायितम् ॥ १५.१०५ ॥

भक्तैरनुगिरं नीतं प्रार्थितो यतिशेखरः ।
पंचगव्यं पपौ किंचित् पंचमेपंचमे दिने ॥ १५.१०६ ॥

स त्यजन् साहसी तच्च तपस्तेपेऽतितापसम् ।
बिल्वपर्णैः क्शितौ पन्नैस्तृप्तिमान् सलिलैरपि ॥ १५.१०७ ॥

यथेष्टमध्यास्त शिलां यमी सुनियमी स ताम् ।
नाऽध्यासते यामेकाहं दैवभग्नास्तपस्विनः ॥ १५.१०८ ॥

पवनांशानुजो जित्वा पवनं रेचकादिभिः ।
विषयेभ्यो हृषीकाश्वान् मनोयंत्रा समाहरत् ॥ १५.१०९ ॥

स्मरन् मुरारेराकारं दध्यावध्यात्मकोविदः ।
समाधिमाधिशमनं योगिलभ्यं स लब्धवान् ॥ १५.११० ॥

मौकुंदे सुंदरे रूपे स्वानंदादिगुणार्णवे ।
स्वाश्चर्यरत्ने मग्नात्मा नान्यत् किंचिद् विवेद सः ॥ १५.१११ ॥

कामत्रासविहीनस्य तस्य सुज्ञानचक्षुषः ।
विना कैवल्यसाम्राज्यं नार्घो योगमणीरभूत् ॥ १५.११२ ॥

मध्वानुजे मध्वनाथो यं प्रसादं व्यधात् तदा ।
स चित्ताविषयत्वाद् वा गोप्यत्वाद् वा न वर्ण्यते ॥ १५.११३ ॥

अहो महाबोधसेवामहिमाऽस्मिन् युगे यतः ।
धन्योऽसौ सिद्धिमापेमां सोऽमरैरित्यलाळ्यत ॥ १५.११४ ॥

तीव्रव्रतोऽतींद्रियविद् विद्याब्धिस्तर्कपंडितः ।
अनिरुद्धपदाधारः प्रेष्ठः शिष्यस्तमाययौ ॥ १५.११५ ॥

तेन संप्रार्थितं यातं रूप्यपीठमिमं पुनः ।
कृत्स्नज्ञं कृपया स्वेषु संप्राप्तं मेनिरे प्रजाः ॥ १५.११६ ॥

कवींद्रतिलको विद्वच्छेखरस्तापसाग्रणीः ।
मध्वकेळीशुकोऽस्याभू च्छिष्यो व्यासपदाश्रयः ॥ १५.११७ ॥

असौ दास्यं ध्रुवं यातं महांतं महतामपि ।
व्यधादनुग्रहं कुर्वन् सामर्थ्यैः कौतुकं नृणाम् ॥ १५.११८ ॥

आरुरोह दुरारोहं स परैः प्रीतिकृद्धरेः ।
महांतं महिमानं च महीध्रं च गुहप्रियम् ॥ १५.११९ ॥

आकृष्टोऽस्य गुणैर्व्याप्तैः यो गोदाया उपाययौ ।
स पद्मनाभतीर्थाख्यः शिष्योऽन्योऽभूत् सुचेतसः ॥ १५.१२० ॥

श्रुत्या मत्या सदा भक्त्या विरक्त्या नित्यसेवया ।
यस्मै प्रसन्नः प्राज्येक्षः सद्यो विद्यां ददौ शुभाम् ॥ १५.१२१ ॥

वेदांताब्धिं न यो जातु जहौ विद्वत्तिमिंगिलः ।
युक्तिप्रवाहसंरंभात् परशास्त्रनदीचरः ॥ १५.१२२ ॥

व्याख्याप्रणादमात्रेण वीरं मन्यान् स्वमंडले ।
मायाविग्रामसिंहान् यो वादिसिंहो निराकरोत् ॥ १५.१२३ ॥

मत्तदुर्वादिमातंगतर्कमस्तकदारणे ।
पंचास्यो योऽभवद् व्यक्तं चतुरास्योऽपि केवलम् ॥ १५.१२४ ॥

सन्न्यायरत्नावळिरप्युदपादि यतः परा ।
टीकाऽपराऽनुव्याख्याया अनर्घा बोधसागरात् ॥ १५.१२५ ॥

वेदप्रवचनाचार्यशिष्योऽसाविति पूजितः ।
सभ्यः सभायां यो वेदं व्याचख्यौ वेदसारवित् ॥ १५.१२६ ॥

अनयोः प्रथमे शिष्याश्चरमे चाभवन्निह ।
अनंतबोधस्यानेके यतींद्रा बहुदेशजाः ॥ १५.१२७ ॥

वशीकृतहृषीकाश्च जननाद्युपमर्दिनः ।
नरसिंहपदाधारा अभ्यस्तोपेंद्रनामकाः ॥ १५.१२८ ॥

अदीर्घान्याभिधाना ये श्रीमद्रामपदाश्रयाः ।
अप्रत्यक्शगुणोद्रिक्ता भक्तिवैराग्यसागराः ॥ १५.१२९ ॥

पादैः पुनंतः पृथिवीं दर्शयंतो हरेः पदम् ।
धूतदुस्समयध्वांता भास्करा इव गां गताः ॥ १५.१३० ॥

मोक्षशास्त्रामृतांभोधिसेवया नित्यनिर्वृताः ।
चक्रिचारुतरार्चासु चक्रिणष्चरणार्चकाः ॥ १५.१३१ ॥

मध्वप्रशिष्या बहवः शिष्या एषां मुहुस्तथा ।
अलंचक्रुरलं पृथ्वीं सर्वे सद्गुणभूषणाः ॥ १५.१३२ ॥

सदा सकलसच्छास्त्रव्याख्यासौख्यामृताब्धिगाः ।
सर्वे दुर्वादिदुर्वादकांडखंडनमंडनाः ॥ १५.१३३ ॥

भूरिभक्तिभराः केचिदेष्वल्पश्रुतसंपदः ।
अप्यल्पबोधा अपरे बहुश्रुतमहागुणाः ॥ १५.१३४ ॥

बहवो गृहिणोऽप्यस्मात् समग्रानुग्रहं ययुः ।
दीप्रा यत्राग्नय इव त्रयो लिकुचशेखराः ॥ १५.१३५ ॥

माध्वं नियोगं ये प्रायो नात्यजन् विदुषां वराः ।
शिष्यक्षेत्रेषु सद्विद्याबीजावापैकदीक्षिताः ॥ १५.१३६ ॥

ग्रामण्यो ब्राह्मणाग्रण्यः प्रापुः पूर्णेक्षशिष्यताम् ।
येषां सद्गुप्तिमात्रेण भवेत् किल परं पदम् ॥ १५.१३७ ॥

शुश्रूषापक्षपाताद्यैः केभ्यश्चित् केवलं ददौ ।
रामप्रियो राम इव स्वां गतिं योगिदुर्लभाम् ॥ १५.१३८ ॥

शिष्यप्रशिष्यातिशया ईदृशा यद्दयोदयात् ।
को नेच्छेत् सुलभं भक्त्या तत्पादसुरपादपम् ॥ १५.१३९ ॥

इत्थं सद्भिः सद्भिरर्च्यो धरायां चक्रे वासं शेषशय्ये शयाने ।
ग्रामे वातैः पाविते काण्वतीर्थैः भक्तप्रीत्या सन्मठेऽनूनबोधः ॥ १५.१४० ॥

आनंदतीर्थभगवद्वदनेंदुबिंबं
विद्यासुधावितितकांति सुकांतिकांतम् ।
यैः प्रैक्ष्यतात्र भवतापशमाय भक्तैः
तद्दासदास्यमपि किं न ददाति पुंसः ॥ १५.१४१ ॥

**॥ इति श्रीमत्कविकुलतिलक त्रिविक्रमपंडिताचार्यसुत**
**श्रीनारायणपंडिताचार्यविरचिते श्रीमत्सुमध्वविजये**
**महाकाव्ये आनंदांकिते पंचादशः सर्गः ॥**

## १६. षोडशः सर्गः

साधुभ्यो मधुमथनांघ्रिभक्तिभाग्भ्यः
श्रौतेभ्यो विततमतेर्महानुभावम् ।
वेदांतं स्वयमिव बंधमोक्षमूलं
व्याचष्ट स्फुटमथ कोऽपि कोविदोऽत्र ॥ १६.१ ॥

गोमत्यास्तटनिकटेऽच्छकीर्तिचंद्रं विश्वज्ञं क्षितिपतिरंत्यवर्णजन्मा ।
विद्वेष्टा श्रुतिगुणसाधकं श्रुतीनां वाचालो वचनमुवाच वाग्मिवर्यम् ॥ १६.२ ॥

उन्मत्तप्रलपितवन्न तद्धि मानं यद् वाक्यं व्यभिचरति क्वचित् फलेऽत्र ।
दृष्टांतो भवति तदप्रमाणतायां सर्वेषां श्रुतिवचसां च सर्वथेति ॥ १६.३ ॥

वेदोक्तं फलमलमाप्यतेऽधिकाराद् इत्युक्तोऽतनुमनसाऽभ्यधत्त धूर्तः ।
योग्यत्वे सति न हि दृश्यतेऽधिकारी नातः स्यात् स खरविषाणवत् सदेति ॥ १६.४ ॥

आक्षेपं तमसहमान उच्चमानः सद्योऽसौ निजकरपल्लवद्वयेन ।
आदाय व्यतनुत बीजमोषधीनां सूक्तेनांकुरदलपुश्पबीजसृष्टिम् ॥ १६.५ ॥

व्याख्याता निशि स कदाचन प्रदीपे
संशांते पुनरपि वाचयांबभूव ।
शिष्यान् स्वान् पुरुकरुणांबुधिर्निजांघ्रेः
अंगुष्ठस्फुटनखरांतरोचिषैव ॥ १६.६ ॥

तीर्थार्थं पृथुतरवप्रपातिवारां धाराणां रयसहनक्षमां महेक्षः ।
आनीतां दशशतपुंभिरत्यशक्त्या प्रेक्ष्योचे विपुलशिलां क्वचित् स मुक्ताम् ॥ १६.७ ॥

लोकानामुपकृतये कुतः शिलेयं निन्ये नो इति जनता जगाद तत्र ।
नेतारो यतिवर मानवा न हीमां भीमश्चेदिह यतते नयेन्न वेति ॥ १६.८ ॥

निन्ये तां गिरिमिव वानरीकृतात्मा लीलावत्करकमलेन सोऽमलेन ।
तत्रापि न्यधित तयाऽस्य सूच्यतेऽलं तत् तुंगां ननु निकषाऽधुनाऽपि कर्म ॥ १६.९ ॥

संघातैरधिकघनैरलंकृताध्वा शिष्याणां यतमनसामुतेतरेषाम् ।
यत्रामा वसति तिथाविनेन चंद्रः तत्रासौ सकलमतिः ससार सिंधुम् ॥ १६.१० ॥

आर्द्राण्गाः सपदि निमज्जनात्सरस्यांकण् वस्य द्विजऋशभस्य वल्लभायाम् ।
तत्राऽयन् खरकिरणोपरागहेतोः ग्रामीणा अपि सकलाः सबालवृद्धाः ॥ १६.११ ॥

सर्वज्ञं सपरिजनं समीक्षमाणाः
फुल्लाक्षाः स्मितवदनाः शुभा ननंदुः ।
दौर्मुख्यं दधत उतापरे निनिंदुः
नाऽश्चर्यं द्वयमपि तत् स्वभावतंत्रम् ॥ १६.१२ ॥

मा मैनं भुवनगुरुं विनिंदतेत्थं
निर्भत्स्याभ्यपतदिवोत्तरंगहस्तः ।
संक्षोभी घनघनघोषघोरवेषः
संरंभी खलदमनाय सिंधुराजः ॥ १६.१३ ॥

सम्मोदात्त तरळतरो द्रुताभिगामी गंभीरस्वननुतिमान् सुघेनहासः ।
वीच्यंगैरधिकतरैरिहाधिवेलं मध्वाय प्रणतिमिव व्यधात् समुद्रः ॥ १६.१४ ॥

गोलीलास्वतिशयिनावगाधभावात् न्नोल्लंघ्यौ विविधगुणप्रकाशरत्नौ ।
मध्वाब्धी परममतेः प्रियं जनानां लावण्यं न तु जलधेरयं विशेषः ॥ १६.१५ ॥

अंभोधेस्त्वरिततरोर्मिपाणिमृष्टे स्वच्छेऽसौ विकटतटासने निषण्णः ।
व्याचख्यावतिचिरमैतरेयशाखा सूक्तानि प्रभुरतिसुंदरप्रकारम् ॥ १६.१६ ॥

गांभीर्यात् स्वनमधरीकरोति सिंधोः श्राव्यत्वं वहति तथाऽप्यहो स्वनोऽस्य ।
पूर्णेंदुप्रभवदनः क एष धन्यो मत्वेत्थं जनजलधिस्तमाशु पर्यैत् ॥ १६.१७ ॥

वेदानां समुचितभाववाददक्षं ये वेदद्विषमिममूचिरे महेर्ष्याः ।
धिग्धिक् तानिति जनता जगाद तत्र स्वाश्चर्यात् किल कलितांजलिर्नमंती ॥ १६.१८ ॥

सन्नामं विपुलहृदे विधाय भक्त्या बिभ्राणाश्चरणरजः सुरेंद्रसेव्यम् ।
तत्स्नानादधिकशुचौ नदाधिराजे सस्नुस्ते द्विजनिकराः प्रशास्तकाले ॥ १६.१९ ॥

कल्लोलैः करिनिकरैरिवानिवार्यैः उल्लोलैर्जन निकरान् निपातयद्भिः ।
आक्रांताः प्रबलतरैश्च लोठ्यमाना हास्यत्वं प्रययुरुदन्वतीह नैके ॥ १६.२० ॥

मज्जंतं पृथुलहरीनिगूढमूर्तिं संपूर्णप्रमतिमसज्जनो जहास ।
यो लोकत्रयविजयी गुरुः प्रसिद्धः सोऽयं ही पतति लघूर्मिलीलयेति ॥ १६.२१ ॥

नीचानामवच वचांस्यजीगणन्नो दभ्राणां क्षुभितकराण्यदभ्रभोधः ।
क्रोष्टूनां श्वकलकलप्रदं विरावं पंचास्यो न हि गणयेदुदारवीर्यः ॥ १६.२२ ॥

जन्मस्थित्यवसितिदायिनं कटाक्षं लोकानामघटयदंबुधौ बृहद्धीः ।
आक्रांतोऽधिकगुरुणा स तेन तावत् मुंचन् संचलनमभूत्तटाकदेश्यः ॥ १६.२३ ॥

इत्याद्यैरपि चरितैरनन्यसाध्यैः न स्थेष्ठां बहुमतिमाप दुर्जनोऽस्मिन् ।
विद्वेषं व्यधित पुनर्निरस्तभाग्ये तस्मिन् दुर्मनसि तदेव शोभनं स्यात् ॥ १६.२४ ॥

संप्राप्तं सह सहजेन गंडवाटं स्वोजस्संप्रकटन आदिशद्विशंकम् ।
शुश्रूषामयमुचितो विधातुमीषत् लोकानामिति वचसा परीक्षकाणाम् ॥ १६.२५ ॥

श्रीकांतेश्वरसदनेऽनयत् किलैको यस्त्रिंशन्नरवरनीतकेतुयष्टिम् ।
आहत्या गुरुगदयैव नाळिकेराद् यो लेभे तरळतरात् फलानि कामम् ॥ १६.२६ ॥

एतादृग्बलविभवः स तस्य कंठं
तज्ज्येष्ठोऽप्यभित उभौ समं गृहीत्वा ।
निष्पेष्टुं परममवापतुः प्रयत्नं
संघर्षात् क्रमपरिवर्धमानतैक्ष्ण्यम् ॥ १६.२७ ॥

आस्विन्नावलसतरौ गुरोर्नियोगात् छत्राग्र्यनिलमहितौ च तावुभाभ्याम् ।
मुक्त्वाऽयःकठिनतरत्वचं शिरोधिं पर्यायस्फुटवचनां निपेततुः कौ ॥ १६.२८ ॥

आश्वस्तौ शुचिहृदिमावनूनमानौ उद्धर्तुं समगददंगुलिं धरास्थाम् ।
संगृह्य प्रसभरसादपि प्रयत्तौ सामर्थ्यं ययतुरिमौ न कंपनेऽस्याः ॥ १६.२९ ॥

निर्यत्नं वटुमधिरुह्य मंदहासी स प्रायादिह परितो नृसिंहगेहम् ।
ऐश्वर्यैरिति लघिमादिकैरुपेतो मध्वोऽभूत् त्रिभुवनचित्ररत्नराजः ॥ १६.३० ॥

पंचाशन्नरपनरोपनीतमात्रां यो वार्क्षीं गृहमधिरोहिणीं निनाय ।
स व्याख्यास्वरदमनाय पूर्ववाटो निर्देशाद् व्यधित गुरोर्गळ प्रपेषम् ॥ १६.३१ ॥

स्विन्नेऽस्मिन्नपि यतमान आग्रहोग्रे प्राच्यात् तत्प्रवचननिस्वनोऽतिरेजे ।
उद्धर्तुं विपुलहृदंगुलीं च नालं सोऽभूदित्यजनि कुतूहलं जनानाम् ॥ १६.३२ ॥

पर्यैक्षि प्रभुरितरैः शिवाग्निपूर्वैः नोपैक्षि प्रबलतरैस्तथा प्रयत्नैः ।
नावैक्षि क्वचिदपि शक्त्यपूर्तिरस्मिन् उत्प्रैक्षि स्वयमपि भीम इत्यवश्यम् ॥ १६.३३ ॥

लेखिन्यां मुहुरपिनह्य कृष्यमाणं नाप्येकं तनुरुहमस्य तूदपाट ।
नासाग्रे मृदुनि कृतैश्च मुष्टिघातैः नास्येंदोरतिबलिभिः प्रसन्नताऽऽसि ॥ १६.३४ ॥

पंचास्यः श्वभिरिव ही विहीनसारैः अंभोधिर्नग सरितां जलैरिवाल्पैः ।
हद्योतैरिव तरणिर्विडंबयन् नॄन् प्रत्यर्थिस्वसमनरैर्व्यवाहरत् सः ॥ १६.३५ ॥

पारंतीसुरसदनं विशालसंवित् संप्राप्तः खलु सुचिरान्निवेद्यहीनम् ।
ग्राम्याग्र्यक्षितिपतिभिर्दिनार्धमात्रात् तद्भूतीर्व्यधित सभूत बल्यनल्पाः ॥ १६.३६ ॥

भीमत्वे सह सहजैः प्रतिष्ठितः प्राक् पंचात्मा मुररिपुरंचितो यदत्र ।
पांचाल्या बलिसलिलं समं ददत्या सोऽस्मार्षीत् तमिममथ प्रपूज्यपूज्यः ॥ १६.३७ ॥

आयास्यन् किल सरिदंतराख्यदेशं ग्रीष्मे निर्जलमिह शुश्रुवांस्तटाकम् ।
तत्काले परमभिवर्षयन् घनौघं तत्पूर्त्यै व्यधित कुतूहलं जनानाम् ॥ १६.३८ ॥

दुर्मंत्रैः खलपटलैः प्रचोद्यमानो ग्रामेशो वृशळपतिः प्रहर्तुमेनम् ।
संप्राप्तस्तत उत यांतमीक्षमाणः प्रोद्यंतं रविमिव विस्मितो ननाम ।१६.३९ ॥

क्षेत्राग्र्यं त्रिभुवनवैद्यनाथनाथं प्रस्थाय प्रचुरतरांतरः प्रभावी ।
श्रीकृष्णामृतपरमार्णवाभिधानां चक्रे सद्वचनततिं स्वभक्तभूत्यै ॥ १६.४० ॥

स ग्रामं परमपि यात उच्चभूतिं विद्वांसः क्व कुहरकूपदर्दुराभाः ।
इत्यूचे मदमतिमानिनोऽखिलज्ञम् मन्यस्य क्षपयितुमेव तज्जनस्य ॥ १६.४१ ॥

सर्व ज्ञोऽप्ययमधिकं न यज्ञभंगीं संवित्ते यतिरिति बद्धनिश्चयोऽसौ ।
आभांतं परिषदि मत्सरादपृच्छत् कर्मार्थश्रुतिगहनार्थखंडभावम् ॥ १६.४२ ॥

छंदोभ्यश्श्युतरससंग्रहप्रवीणान् षष्ठेऽह्नि प्रतिविहितान् प्रजाधिपेन ।
नाराशंस्यचरमचारुमंत्रभेदान् ऊचेऽसौ तमभिदधद् विसंशयांशः ॥ १६.४३ ॥

पांडित्यं परममवेत्य तस्य तादृक् संघर्षत् क्षुभितमना विपक्षसंघः ।
नार्थः स्यादयमिति वर्णयन्नथ त्वं तं ब्रूहीत्युरुमतिनेरितोऽद्रवद् द्राक् ॥ १६.४४ ॥

सोऽपृच्छत् तमथ महाह्वयोपसर्गा यत्रोक्ता मनुचरणोपसृज्यरूपाः ।
तस्यार्थं वचनचयस्य तं ब्रुवाणः स्थैर्यार्थं सपदि स लेखयां बभूव ॥ १६.४५ ॥

संपूर्णं शशिनमिवोदितं कृशः ष्वा
चक्षोभाशुभनिकरो निरीक्ष्य मध्वम् ।
प्रत्यर्थी स्वयमिति दूरवोऽभिधावन्
किं तेन क्षतममृताकरस्य तस्य ॥ १६.४६ ॥

निस्स्वानां कतिपयभुक्तियुक्तभक्तं
भक्तानां व्यधित चतुर्गुणं दयालुः ।
भुंक्ते स्म त्रिदशनरोपभोग्यमन्नं
संप्रीत्यै स धनवतां बृहत्प्रबोधः ॥ १६.४७ ॥

वृष्ट्यादेः स नियमनादि चक्र ऐतत्
चित्रं किं भुवननियामके समीरे ।
अप्येवं भुवनगुरोः कृतानुवादः
कृत्येषु प्रवर इतीह वर्णयामः ॥ १६.४८ ॥

इत्यूचे धरणिसुरेण केवलं नो
माध्वीयं विविधकथा कथासु मान्या ।
साक्षादप्यमरवरैरुदीर्यमाणा
गंधर्वैर्द्युसदसि तन्मुदे जगेऽसौ ॥ १६.४९ ॥

तां पद्यप्रणिगदितां तु मूर्छयित्वा
तानानामुचिततयाऽऽत्तपंचमाद्याः ।
गांधारं द्युविषयमुज्ज्वलं सृजंतो
ग्रामं ते प्रजगुरकाकिकम्रकंठाः ॥ १६.५० ॥

आनम्रैः सुमुकुटमौलिभिः कराग्रैः
आताम्रैः प्रतिकलितैः स्मितैर्मुखाब्जैः ।
आश्रावि स्थिरतरभक्तिभिः सुरेंद्रैः
तद्गीता दशधिषणार्यवर्यचर्या ॥ १६.५१ ॥

गीर्वाणैर्विजयमहोत्सवस्य पूजां
कुर्वाणैरविरळसंविदस्तदानीम् ।
विस्मेरैर्मुनिनिकरोपदेवयुक्तैः
सुस्मेरैरथ तमवेक्षितुं प्रजग्मे ॥ १६.५२ ॥

आदर्शं गुणगणदर्शने मुरारेः
सच्छास्त्रं रचितमनेन वर्णयंतः ।
प्रद्योतैरुडुपदवीं प्रकाशयंतः
प्रैक्षंत प्रचुरमनोविलाससमेते ॥ १६.५३ ॥

नाकींद्रास्तमवनिभागमावसंतं
सुश्लोकैरपि भुवनानि भूषयंतम् ।
नेमुः खादुपनिषदं तदैतरेयीं
व्याख्यांतं विविधविषिष्टशिष्यमध्ये ॥ १६.५४ ॥

श्रीमंतं शशिवदनं कुशेशयाक्षं
गंभीरस्वरमतिदिव्यलक्षणाढ्यम् ।
पश्यंतः स्वगुरुमथार्चिचन् कृतार्था
वाण्या तं हरिरतिपूर्णकाममेते ॥ १६.५५ ॥

अहरो दुरागमतमः स्वगोगणैः
अकरोर्मुकुंदगुणवृंददर्शनम् ।
अजयश्चतुर्दश जगंति सद्गुणैः
शरणं गुरो करुणयाऽपि नो भवेः ॥ १६.५६ ॥

नमस्ते प्राणेश प्रणतविभवायावनिमगा
नमः स्वामिन् रामप्रियतम हनूमन् गुरुगुण ।
नमस्तुभ्यं भीम प्रबलतम कृष्णेष्ट भगवन्
नमः श्रीमन् मध्व प्रदिश सुदृशं नो जय जय ॥ १६.५७ ॥

इति निगदितवंतस्तत्र वृंदारकेंद्रा
गुरुविजयमहं तं लाळयंतो महांतम् ।
ववृषुरखिलदृश्यं पुष्पवारं सुगंधं
हरिदयितवरिष्ठे श्रीमदानंदतीर्थे ॥ १६.५८ ॥

**॥ इति श्रीमत्कविकुलतिलक त्रिविक्रमपंडिताचार्यसुत**
**श्रीनारायणपंडिताचार्यविरचिते श्रीमत्सुमध्वविजये**
**महाकाव्ये आनंदांकिते षोडशः सर्गः ॥**

**॥ समाप्तोयं ग्रंथः भारतीरमण मुख्यप्राणंतर्गत**
**श्री कृष्णार्पणमस्तु ॥**